वाचोयुक्तिसवित्रि देवि भव मे वाचोविधेया गुणा-
न्सुत्रामणो रघुनाथनेतुरवनेः स्तोतुं यतिष्ये यतः ।
जिह्वा त्वत्प्रियकल्पिता फलवती जीयान्मदीया ततः
किं चासन्नृपवर्णनेन जनितः खेदस्त्वया त्यज्यताम् ॥ ५९ ॥

नित्यावर्तितनैकदान विनमन्नेपालसिंहासन-
प्रत्यापत्तिविधानशौण्ड मदवत्पाण्ड्यक्षितापपण्डित ।
जिह्वास्पन्दनमात्रजृम्भितवचःसंदब्धनानाकृते
प्रह्वाशेषनृप प्रजावनविधौ मूर्त्यम्बिकानन्दथो ॥ ६० ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ६१ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहिती-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
गोविन्दाध्वरिसूनुरग्रिममिमं सर्गं मखिग्रामणीः
काव्ये पूरयति स्म विस्मयकरे साहित्यरत्नाकरे ॥ ६२ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्यासवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।

रङ्गाधिभूमिरमानुनीतिशृङ्गारवीक्षामृतपूरितायाः ।
सह्यात्मजायाः सलिलैः सदैव स ह्लादतो दीव्यति चोलदेशः ॥ १ ॥

सह्यात्मजाभ्यागमनं प्रियाय सरस्वते वक्तुमिवाशु धावन् ।
प्रभञ्जनो यत्र कृषीवलानां प्रपञ्चमुत्साहिनमातनोति ॥ २ ॥

नदीपु वारीण्यपरासु पीत्वा नभस्वता पश्चिमदिग्भवेन ।
मरुद्वृधायास्त्यजताधिपूरमहेतु यत्नादनुगृह्यते यः ॥ ३ ॥

द्वीपान्तराणां तरिभिः स्वभर्त्रा संभाव्यमानं बहुवस्तुभाग्भिः ।
सह्यात्मजा यं स्वयमप्यनन्यसाधारणं पुष्यति सस्यभेदैः ॥ ४ ॥

मरुद्वृधायाः कुतुकेन सह्यमहीभृतो येन पथा पतन्त्याः ।
संभेददेशागतनीभृतानि दत्ते नु वस्तूनि धवो धुनीनाम् ॥ ५ ॥

महाप्रवाहेयमितीव मध्येमरुद्वृधं रङ्गपतिः शयानः ।
यस्योपयोगक्षममेव पूरं विभज्य चान्यं नयते पयोधिम् ॥ ६ ॥

तनूभवे वत्सलतानुरागो धवे समं तद्द्वितयं ममेति ।
द्वेधा विभक्तेव कवेरजा यं पुष्णाति सिन्धुं च भजत्यजस्रम् ॥ ७ ॥

सरित्पतिं दक्षिणमेत्य रन्तुं सद्यो वियोगातिशयेन विघ्ना ।
सह्यात्मजा यत्र सहस्रधैव निजप्रवाहान्नियतं विधत्ते ॥ ८ ॥

सह्यात्मजां यत्तरुसूनपालीधूली तदात्वे चुलुकेऽकरिष्यत् ।
चिक्रीडकच्छिन्नरसालसारनदी तदन्तर्यदि नापतिष्यत् ॥ ९ ॥

पक्वेक्षुपर्वस्युतशालिगोपीगीतिद्रवन्मौक्तिकक्लृप्तसेके ।
केदारके यत्र कवेरकन्या स्नानाज्जनानां सफलत्वमेति ॥ १० ॥

केदारके यस्य भवाः कवेरकन्यामधोऽधः कलमप्ररोहाः ।
ततोऽप्युदग्राः स्वविवृद्धिहेतोरुद्ग्रीवयन्ते किमुदीक्षणाय ॥ ११ ॥

पतंगपारावतबालकादीन्केदारके स्तम्बकरीनशेषान् ।
फलत्यशम्बाकृति भामिनीभिः क्रीडन्ति यस्मिन्कृषकाः सुखेन ॥ १२ ॥

त्रैहेयतिल्योपवनादिभूमेरन्यत्र खल्यास्ववनीविलान्तः ।
पूर्णे परारिलपरूत्नधान्यैर्यत्रैपमस्त्यं बहिरेव धान्यम् ॥ १३ ॥
सदा रसाला नवशालिगोपीसंगीतिमाधुर्यमुषोऽधियन्त्रम् ।
संपीडिता यत्र रसापदेशात्तदेव माधुर्यमहो त्यजन्ति ॥ १४ ॥
संपीडिते यन्त्रमुखैर्निजान्तःसारापलापेन रसालजाले ।
पक्वानि यस्मिन्पनसा विदार्य फलानि वर्षन्ति मधून्यजस्रम् ॥ १५ ॥
नतभ्रुवां स्वप्रसवैर्हरन्ति नासाश्रियं हन्त तिलास्तदेषु ।
स्नेहोऽस्तु भग्नः सपदीति यन्त्रैस्तिलान्यदन्ते किमु पीडयन्ते ॥ १६ ॥
आश्लेषवत्यामहिवल्लिकायां गाढानुरक्तिं क्रमुकाः स्वकीयाम् ।
पाकारुणानां फलमण्डलीनां दम्भेन यस्मिन्किमु दर्शयन्ति ॥ १७ ॥
पदे पदे पन्नगवल्लरीभिर्गाढोपगूढान्क्रमुकान्सदैव ।
आलोक्य रम्भाः फलभारदम्भादानम्रचूडास्त्रपयेव यत्र ॥ १८ ॥
सदैव माधुर्यममी वहन्ति सर्वत्र पुण्ड्राः फलितादशायाम् ।
वयं तु कुत्रापि बतेति रम्भा ह्रियेव नम्राः फलिना यदीयाः ॥ १९ ॥
त्रोटीपुटीभिस्त्रुटितानवेक्ष्य पुण्ड्रान्विभीताः पुरतः शुकानाम् ।
रम्भा यदीया रचितप्रणामाः फलानि किं प्राभृतयन्ति तेषाम् ॥ २० ॥
पचेलिमानां कदलीफलानां पातेन यस्याध्वनि पङ्कभाजि ।
पाकेन पान्थाश्च्युतनालिकेरफलेषु विन्यस्य पदं प्रयान्ति ॥ २१ ॥
निष्कञ्चुकैर्यत्सुदृशामुरोजैर्निष्कासितानेत्र गिरीनवेक्ष्य ।
पयोदगर्भेषु वसन्ति केरफलानि तत्साम्यभयेन नूनम् ॥ २२ ॥
रजस्वलाभिर्मधुपा रसेन साकं रमन्ते गणिकाच्छटाभिः ।
पार्श्वे सतीनामपि पद्मिनीनामिति स्फुटं यत्पुरुषा हसन्ति ॥ २३ ॥
अम्भोजिनीष्वाहितपक्षपातं हंसा रमन्ते परमा बतेति ।
सदालिभिर्विश्रुतजातिभाग्भिर्हसन्ति यत्राभिहिताः कुमाराः ॥ २४ ॥
अनावृतानां द्रमिडाम्बुजाक्षीपयोधराणां प्रथिमानमेक्ष्य ।
प्रायेण मन्दाक्षभरेण वासं शिलोच्चया यत्र न शीलयन्ते ॥ २५ ॥

संगीतिभिः संततशालिपालिविलासिनीनां किमु विद्रुतायाः ।
स्थानानि पङ्केरुहनीचराणां तडागरूपेण लसन्ति यस्मिन् ॥ २६ ॥
एलालतावीरणपाटलानां वेलागतानां फलमूलपुष्पैः ।
यत्नाहृते यत्र सुवासितानि श्रयन्ति पान्थाः सरसीजलानि ॥ २७ ॥
प्रपा प्रतिग्रामपथं निजाङ्के निधाय मातेव निदाघतप्तान् ।
सद्यस्तनस्वादुपयो दिशन्ती पुष्णाति यस्मिन्पथिकानजस्रम् ॥ २८ ॥
क्रतूञ्शतं कामनया विनैव यत्राहरन्तो मखिनो यथावत् ।
ऐन्द्रं पदं हव्यमपि प्रदाय सदानुगृह्णन्ति शचीपरिण्यम् ॥ २९ ॥
क्रतुप्रयोगक्रमशीलनेषु द्विजात्मजा यत्र दिवोऽवतार्य ।
आह्वानतो देवगणानथान्यं सर्वं नयन्ते सहजं हसन्तः ॥ ३० ॥
यस्मिन्महावीरमवेक्ष्य मन्युभवानलं पार्थिवमुद्गिरन्तम् ।
महाहवे शस्त्रभयेन त्रासं जहात्यधर्मीकृतिरस्य शत्रुः ॥ ३१ ॥
यस्मिन्महेन्द्रे यजमानहव्यस्वीकारभूम्ना स्थितवत्यजस्रम् ।
एतत्प्रियां बाधितुमेव कामो गृह्णात्यहो नन्दनकोरकाणि ॥ ३२ ॥
यज्ञोपयुक्तामिव यच्छ वाचं ब्रह्मन्निति प्रैषगिरं प्रयुज्य ।
यद्याजका यज्ञहविर्ग्रहीतुं ब्राह्मणमध्यागतमाक्षिपन्ति ॥ ३३ ॥
महीसुरैर्यत्र मखेषु हूताः प्रकाशयन्तः प्रतिभाममीषाम् ।
मखाशनास्तन्मतितत्त्वविज्ञाः कुर्वन्ति सर्वेऽपि गुरोरवज्ञाम् ॥ ३४ ॥
पदे पदे यत्र भवस्य विष्णोरप्यास्पदान्यायतनेषु वीक्ष्य ।
सदाग्रहारेषु सतां द्विजानां व्याजेन धाता वहति प्रतिष्ठाम् ॥ ३५ ॥
प्रत्यग्रहारं प्रतिगोष्ठमेव विप्रैस्त्रिवेदीत्रिभिवावदूकैः ।
गोभिश्च तृण्याकवलांसलाभिर्महीयते यत्र मनुर्हविश्च ॥ ३६ ॥
मज्जन्त्यपि स्वादुमधुद्रवेषु द्राक्षाफलानि द्रमिडीवचोभिः ।
धूतानि यस्मिन्पदताडिता तु दूरे सिता तत्समताकथायाः ॥ ३७ ॥
रसालसारो रमणीवचोभिः साम्यस्य हेतोः स्वयमग्नितप्तः ।
जन्मान्यदप्येत्य सितात्मना यज्जनैर्भजत्येव पदा हतानि ॥ ३८ ॥

यदीयविप्राहुतयागवह्निवह्निध्वजा एव वलाहकत्वम् ।
अवाप्य यागीयहवींषि नानाधान्यानि पुष्णन्ति सदाभिवृष्य ॥ ३९ ॥
तत्तादृशे काचन चोलदेशे रमानटीनर्तनरङ्गशाला ।
तञ्जापुरी नाम दरी हरीणां धराभुजां राजति राजधानी ॥ ४० ॥
तमांसि पश्चार्धततान्यनर्कभेद्यानि मेऽसौ महसा भिनत्ति ।
इति न्ययुङ्क्त प्रभुमीक्षितुं यत्सालं ससूनुं किल चक्रवालः ॥ ४१ ॥
आशङ्क्य सौधाश्रययोषिदाभाहरं सविद्युल्लतमम्बुदं या ।
सालाग्रशृङ्गक्रकचैस्तदन्तः श्लथं लुनाति स्तनितार्तनादम् ॥ ४२ ॥
अगाधखेयाम्बुभिरुन्नता यत्प्राकाररेखा परितः परीता ।
श्रियं विधत्ते जगदण्डभित्तेरवस्थिताया बहिरम्बुमध्ये ॥ ४३ ॥
प्राकाररेखाशिखराभिघाताद्ब्रह्माण्डभाण्डे स्फुटितोर्ध्वभागे ।
अमुष्य रन्ध्रादभितः स्रुतानि पयांसि यस्याः परिखेति शङ्के ॥ ४४ ॥
उत्तीर्णमप्यर्णवपूरमुर्वीभृतश्च धूतान्प्लवगैर्हसन्ति ।
सहस्ततालं वरणैस्तरङ्गफेनच्छलाद्यत्परिखाजलौघाः ॥ ४५ ॥
आशङ्क्य मैनाकरणेरमर्यमुद्रां पुनर्मुक्तसमुद्रवासाः ।
प्राकाररेखाप्रतिबिम्बदम्भात्खेयेषु यस्या गिरयोऽवगाढाः ॥ ४६ ॥
प्रतिक्षपं स्वप्रमदानिवासं समेत्य लक्ष्येण शशस्य विष्णुः ।
हर्म्येषु वक्त्रांशुहरं वधूभिरिन्दुं हृतं मोचयतीव यस्याम् ॥ ४७ ॥
आक्रीडवृक्षाग्रमयूरभीतिश्लथानशीतांशुरथाहिरश्मीन् ।
स्तब्धान्पुनर्गारुडसौधभासा यस्यामयत्नं द्रढयत्यनूरुः । ४८ ॥
आस्वाद्य हर्म्येष्वमृतांशुबिम्बं योषामुखभ्रान्तिजुषो युवानः ।
धिगेतदस्वादु वधूमुखं नेत्यह्नाय यस्यामवधीरयन्ति ॥ ४९ ॥
यत्सौधसिंहप्रतिमानुबिम्बमीक्ष्याभ्रगङ्गापयसीन्द्रहस्ती ।
त्रस्तोऽपि गृह्णाति तदेव यन्तुः सृणीप्रहाराकुलनाविलोलम् ॥ ५० ॥
यदीयसौधोन्नतिमेव वीक्ष्य विन्ध्याचलेन्द्रस्त्रपया विनम्रः ।
वाचंयमेन्द्रेण कृताभिषङ्गो वातापिजेत्येति मृषा वदन्ति ॥ ५१ ॥

प्राकारिनीलोपलपद्मराग-
च्छायाजुषि द्योसरिति त्रिवेण्याम् ।
मङ्क्त्वेव सन्मार्गगता भवन्ति
चन्द्रावतंसाः किल यत्र सौधाः ॥ ५२ ॥

हर्म्येषु यत्रेन्दुवधूकपोलावन्योन्यजन्यप्रतिबिम्बदम्भात् ।
स्पर्धावशेनेव परस्परस्य परम्परामादधतौ विभातः ॥ ५३ ॥

पङ्कभ्रमाद्यन्मणिसौधभासि
सादी हरेः सैन्धवमभ्रसिन्धौ ।
प्रक्षाल्य तस्मिन्विशदे तु पौरी-
सांहासिनैः शंसति नैपुणीं स्वाम् ॥ ५४ ॥

जालागतः सौधतलेषु यस्यां लीलारविन्दैर्ललनाभिरिन्दुः ।
मुखांशुचोरः प्रहतो मुधा तैस्तादादि मुग्धस्तनुते विरोधम् ॥ ५५ ॥

भूमीपतौ यत्र भुजाबलेन वहत्ययत्नं वसुधामशेषाम् ।
कुलाचलानां कुलमेति दन्तिभावं किमु प्रत्युपकर्तुकामम् ॥ ५६ ॥

वीथीषु वीथीषु विलासिनीषु विद्युन्महश्चौर्यविचारणाय ।
घनाघना एव चरन्ति क्लृप्तघण्टारवा यत्र करिच्छलेन ॥ ५७ ॥

स्यदाभिभूतस्य दधाति सोऽयं सदागतेः स्यन्दनमित्यवेत्य ।
तुरंगमा यत्र रुषा तुषारकरं प्रसन्ते घनफेनदम्भात् ॥ ५८ ॥

अतिस्यदेष्वस्मदपाकृतस्य महोन्नतोऽसौ मनसः कुमारः ।
इत्येव संदश्य किमिन्दुमश्वा वमन्ति फेनं व्यपदिश्य यस्याम् ॥ ५९ ॥

रामौ च भीमौ च नरं च हित्वा भूमौ भटा योद्धुमिहाजिहोध्वम् ।
इत्युद्धुतैर्यत्र सपञ्चवर्णैर्विभान्ति वीरा बिरुदाङ्कपट्टैः ॥ ६० ॥

धाराधरा नः सरसं धरन्ति सदेति यस्यां चपलाक्ष्यरन्त्यः ।
किमम्बुजाक्षीनिभतः कृतज्ञाः केशात्मना ताञ्शिरसा वहन्ते ॥ ६१ ॥

चलाचलाक्षीश्चपलाभिरेव विधाय यत्नेन विधिर्यदीयाः ।
कुत्रापि दक्षवेव गुणं तदीयं कुर्वन्स्वशिल्पं प्रकटीकरोति ॥ ६२ ॥

अनङ्गतां प्राप्तमपि स्वदृष्ट्या सुमायुधं यत्सुदृशामपाङ्गः ।
अङ्गीकरोतीति हरस्तदादि भजत्यहो पौरुषमर्धमेव ॥ ६३ ॥

विमोहितो यत्र विलासिनीनां लावण्यलेशेन रतेरधीशः ।
स्वस्मिन्नहाति स्वमिषुं विधेयमन्यत्र जानन्नपरं किमास्ते ॥ ६४ ॥

गन्धापणेषु भ्रमतामलीनां कलः स्वनो योपिदधिष्ठितेषु ।
मौर्वीनिनादो मदनस्य यस्यां पान्थान्ध्रुवं पाटयते विपाठैः ॥ ६५ ॥

सुमेषुबन्धं गुणयोगभव्यं सुगात्रि मामद्य नयेति यस्याम् ।
नर्मोक्तिमूल्यैर्न परं विलासी क्रीणाति पुष्पाणि कृशोदरीश्च ॥ ६६ ॥

केलीवने यत्र वृतानि माध्वीहुत्वा स्थलाम्भोजहुताशनेषु ।
शश्वन्निरुन्धन्ति नु शाखिनोऽपि महीगता एव पदं मघोनः ॥ ६७ ॥

पद्मं दिनेशदलितं हरिबाहुमध्यं
पादाहतं भृगुमुनेः शशिनं नभोगम् ।
ऐभं शिरोऽपि करधूलिभृतं विहाय
पद्मा चिरं वसति यत्र परं प्रहृष्टा ॥ ६८ ॥

केशांशुर्यदि कालिका कलयतामद्धा विपास्वादनं
नेत्रश्रीर्यदि नित्यमेणनिवहाश्चर्वन्तु सर्वं तृणम् ।
वक्त्रेन्दुर्यदि तिग्महेतिदलनं पाञ्छेत्सुखं वारिजं
यस्याः किं परमेणशावकदृशामङ्गं जगन्मोहनम् ॥ ६९ ॥

गाम्भीर्यं परिखाम्भसां प्रभवति स्तोतुं फणिग्रामणीः
प्राकारोच्छ्रयसंपदं च नलिनीप्राणेश्वरो बुध्यते ।
यस्या विस्तृतिवैभवं च ककुभामीशाः परं जानते
तादृक्षां नगरीं गिरा कलयितुं दक्षा न हि क्ष्मातले ॥ ७० ॥

कर्णाटकप्रभुसुखप्रद शौर्यधुर्य
सन्नाटकप्रथित माथितशत्रुलोक ।
साहित्यभोजसदृशान्वहदत्तविप्र-
सौहित्यभोजन जनप्रमदामृतांशो ॥ ७१ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥७२ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारोभवत्साहिती-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
द्वैतीयीकमपूरयत्कविवरः सर्गं मखिग्रामणी-
रत्नाकृद्वदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ७३ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखाग्निरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
द्वितीयः सर्गः ।

## तृतीयः सर्गः ।

पुरोमथासाद्य भुजेन तादृशं भुजंगमेन्द्रप्रतिमेन मेदिनीम् ।
मसारकेयूरसमं महायशा बभार चेन्न्रक्षितिपालशेखरः ॥ १ ॥

यदीयबाहार्गलमेत्य विद्विष द्विलासिनीवीजितचामरोदितैः ।
समीरणैरादित शर्म मेदिनी बिलेशयाधीशविषानलाकुला ॥ २ ॥

गुणावलीमौक्तिककोशमन्दिरं जयेन्दिराजन्मतरङ्गमालिनम् ।
प्रतापभानूदयपूर्वपर्वतं यशःप्रसूनोपवनं च यं विदुः ॥ ३ ॥

सजीवबन्धं जगतीसमीहितं विषादमासादितविग्रहं द्विषाम ।
कृतावतारं भुवि कल्पगादपं भणन्ति यं चारभटाग्रतःसरम् ॥ ४ ॥

नलस्य वीप्सा नहुषस्य नाटिका पृथोर्विभाषा प्रतिमा पृथाभुवः ।
शरीरभेदः सगरस्य शंतनोर्निदर्शनं निर्वचनं नृगस्य यः ॥ ५ ॥

सरो गभीरं पुरि गोपुरं च यः समुन्नतं शोणगिरीशितुर्व्यधात् ।
अशक्नुवोरङ्घ्रिशिरो विलोकितुं महापथौ माधववेधसोरिव ॥ ६ ॥

महाप्रतीहारमनोज्ञमुन्नतं यदाहितं गोपुरमेधतेतराम् ।
क्षतं कुमारेण कृतं तदन्तरे कपर्दिने क्रौञ्च इव प्रदर्शयन् ॥ ७ ॥

यदाहिते यामवतीशशेखरो वसत्यमुष्यां वरणे हिरण्मये ।
पुरा पुराणामिव कुण्डलीभवत्सुराद्रिचापान्तरशोभितो युधि ॥ ८ ॥

सुधांशुचूडस्य यथा सुता गिरेः पयोजनाभेरिव पङ्कजालया ।
विधेः सवित्रीव गिरां विशां विभोरमुष्य जायाजनि मूर्तिमाम्बिका ॥ ९ ॥

पतिव्रतानामनया पताकया व्यतस्त सोऽयं वसुधासुधाकरः ।
सदक्षया दक्षिणया सवो यथा यथैव धर्मो दयया यथार्थया ॥ १० ॥

पुरंध्रिरस्मादवनीपुरंदरादसूत सा शूरमथाच्युताधिपम् ।
कुलाचलाधीशकुमारिकामणी धरेन्द्रचापादिव तारकाहितम् ॥ ११ ॥

हुताशनेनोत्तरवेदिका यथा पयोधराणां पविनेव रेखिका ।
दिवाकरेणेन्द्रदिशेव तेन सा सुतेन साध्वी शुशुभे महौजसा ॥ १२ ॥

करं स धात्र्याः शिशुराददे यदा करं व्यमुञ्चन्त तदैव ये द्विषः ।
पदानि विन्यस्यति तत्र पञ्चषाण्यमी पलायन्त किमेतदद्भुतम् ॥ १३ ॥
स्तनंधयस्तातदुरुद्धरानपि क्षितिक्षितः स क्षिणाति स्म शात्रवान् ।
उदित्वरः शार्वरमुष्णदीधितिर्न किं हरेत्पूर्वनगोपरोधकम् ॥ १४ ॥
तनूभवस्तस्य धरापतेरधात्तनोरनाडिंधमशिल्पकल्पितम् ।
प्रसाधनं पञ्चशरोपजीवनं वधूमनःसंवननं स यौवनम् ॥ १५ ॥
अदिद्युतन्नाम्नमथाभिरूपता तथाविधस्यास्य धराधिभूभुवः ।
पुलोमकन्याहृदयेशभूरुहः प्रसूनसंपत्प्रथमेव शाखिकाम् ॥ १६ ॥
युवानमेनं युवराजतापदं नयन्नयं नन्दनमात्मसंनिभम् ।
स निर्वबाराबनिवासवासवस्ततोऽनु विन्यस्तसमस्तभूभरः ॥ १७ ॥
भुजायुगेनाच्युतभूविभुस्ततः शशास भूमीवलयं स विद्विषाम् ।
मनोरथद्वारमहाकवाटिकाकठोरवक्षोघटितार्गलश्रिया ॥ १८ ॥
कुमारकण्ठीरव एष कोविदः प्रभोः प्रजापालनकर्मनर्मणि ।
स पर्यणैषीत्सममेव भूभुजा सुतामणीः काश्चन शोभने दिने ॥ १९ ॥
धुनीषु जह्नोर्दुहितेव नीरधेर्हरेरिवाम्भोरवधूषु राधिका ।
अमुष्य जायास्ववनीबिडौजसो मुदे विशिष्याजनि मूर्तिमाम्बिका ॥ २० ॥
सुलोचना शीलवती शुभार्जने सुदक्षिणा सोमकलाधरार्चने ।
अरुन्धती सा दयितानुवर्तने तथानसूया परधामसंपदि ॥ २१ ॥
विना त्रिलग्नेन विलोचनादृते कृशोदरी कौशिकमन्तरेण सा ।
परत्र नो नास्तिकभावमादधावधीरभूयं मलिनात्मतामपि ॥ २२ ॥
स्तनेन पृथ्वी रुचिरा तनुश्रिया मृगी दृशा मन्दहसेन चन्द्रिका ।
स्वयं च तन्वी वचसा प्रियंवदा व्यतनि सद्वृत्तविनिर्मितेव सा ॥ २३ ॥
चलाचलाक्षीकचभारचारुताविलासचौर्यापयशोविधूतये ।
स्पृशन्ति सत्यापयितुं फणाभृतां शिरांसि किं वा बहुधा शिखण्डिनः ॥
सुधाकरः सर्वसुखावहः कथं पयोरुहं चारु परं निरस्यति ।
इतीव धाता हरिणेक्षणामणेरयूयुजत्ते वदनाक्षिलक्ष्यतः ॥ २५ ॥

वधूमतल्लीवदनांशुलेशतः पयोरुहाणां पटलं पराजितम् ।
तदादि किं वा खरहेतिदारितस्वगर्भमास्ते कुहचिद्वनान्तरे ॥ २६ ॥
उपेत्य पश्चादुपगूहनेच्छया विलासिनो वक्रविधोः सविभ्रमम् ।
कचच्छपाया विहितौ करावित्र व्यरोचिषातां वनितामणेर्भ्रुवौ ॥ २७ ॥
सचिल्लिकाञ्चन्मृगनाभिचित्रका तदीयनासां धृतनासिकामणिम् ।
ततच्छदालिश्रयणानतं तिलप्रसूनमुद्यन्मधुबिन्दु भावये ॥ २८ ॥
सदानुरक्ताधरसंनिधानतो द्विजा विशुद्धाश्च भवन्तु तादृशाः ।
कुशेशयाक्ष्याः कुटिलत्वमापतुर्दृशौ कथं वा परिशीलितश्रुती ॥ २९ ॥
पयोरुहाक्ष्याः कुरुविन्दकुण्डलप्रभापरीता हृदि गल्लपालिकाम् ।
अवैमि कौसुम्भपटीकृतावृतिं मणीमयं मान्मथमेव दर्पणम् ॥ ३० ॥
कुशेशयाक्ष्या विधिना कुलाचलावदर्दुरं तक्ष्णुवता स्तनात्मना ।
क्वचित्प्रमाणाधिगमाय कल्पितं तदुन्नतेर्लाञ्छनमत्र चूचुकम् ॥ ३१ ॥
सुलोचनायाः स तु शून्यवादिनां मतेन धाता विततान मध्यमम् ।
जयन्ति तेनैव जगन्ति हन्त ते भवेत्कथं माध्यमिकप्रथान्यथा ॥ ३२ ॥
विधाय तस्या विपुलं कुचद्वयं नितम्बबिम्बं च स नीरजासनः ।
अतः सृजन्नूर्ध्वमधस्ततोऽङ्गकान्युपेक्षया मध्यममुज्झति स्म किम् ॥ ३३ ॥
तदङ्गलेखां सृजता स्वयंभुवा प्रमाणलेखा प्रथमं व्यलेखि या ।
विलग्नतोऽन्यत्र विधेरसौ गता स्थितात्र रोमालिनिभादसंगतः ॥ ३४ ॥
तदीयगुल्फद्वयमङ्घ्रिपल्लवाविमौ सरागाविति हा तिरोदधे ।
कुतः सुवृत्तः कुशलत्वमेयिवान्सहेत धूर्तैः सह वासमात्मनः ॥ ३५ ॥
प्रभानिभाम्भोधिनिमग्नपार्ष्णिभिन्मणीलसद्धंसकमेदिनीधृतेः ।
अलीककूर्माधिपतेरवापतुः सरोरुहाक्ष्याः प्रपदे सरूपताम् ॥ ३६ ॥
सरोरुहाक्ष्याः समतातिगर्वितं पदे दृढं ताडयतः स्म पङ्कजम् ।
ततो मृदुत्वेन तदीयरेखिका तयोरभूत्पाटलिमा च सर्वतः ॥ ३७ ॥
उपेत्य तत्तादृशमुत्पलेक्षणाशिरोमणीमिन्दुरिवाथ रोहिणीम् ।
चिरेण रेजे चिनचेळ्वयाच्युतप्रभुर्वितन्वन्प्रमदं स देहिनाम् ॥ ३८ ॥

वसुंधरामच्युतभूवलादपि प्रतापिनि स्वालयवत्प्रशासति ।
जनस्य कुत्रापि न शत्रवोऽभवन्भवेयुरेते यदि कामनादयः ॥ ३९ ॥

अमुष्य भूमेरसिपन्नगो विभोः पटुर्द्विपत्प्राणसमीरपारणे ।
दिगन्तरेषु त्यजति स्म कञ्चुकच्छटा समज्ञाच्छलतः किमन्वहम् ॥ ४० ॥

उदित्वरः प्राशुभुजोदयाचलान्महीपतेस्तस्य महोविभावसुः ।
परावनीभृत्प्रसृतायशोभरच्छलापगाः शोषयति स्म सर्वतः ॥ ४१ ॥

प्रयाणनिस्साणपटुध्वनिस्फुटत्पितामहाण्डप्रभवं महान्तरम् ।
बहिर्जलक्लिन्नमदःपताकिनीरजोभरैरेव पुनस्तिरोहितम् ॥ ४२ ॥

प्रसृत्वरं प्रत्यभिषेणनं प्रभोश्चमूरजश्चूषितसप्तसागरम् ।
फणैः स्फुरत्फूत्कृतिभिः फणी विभौ स पर्यहार्षीच्छयिते बतात्मनि ॥

पराकृतास्तेन परे ह्रदन्तरे प्रयुक्तमङ्कं मकरं पुरंध्रिभिः ।
चिरेण पृष्ट्वा मकरो कपोलतः श्रितेति तासां विदधुः प्रलोभनम् ॥ ४४ ॥

कवौ तुलामत्र नृपे कलाधरे समेयुषि स्वर्णसमृद्धिकारिणीम् ।
क्षणेन वृष्टिं सुमनःकदम्बकं समं समाश्चद्रुत सार्वलौकिकम् ॥ ४५ ॥

अनेन दानान्यकृतानि यानि तान्यलक्षितान्येव बत स्मृतिष्वपि ।
अतोषितास्तैरपि ये धरासुरा वसन्ति ते नैव वसुंधरातले ॥ ४६ ॥

अनर्घरत्नाङ्कितमेष भूषणं वितीर्य रङ्गाधिपतेर्विशां पतिः ।
अनुत्तमं रत्नममुष्य कौस्तुभात्परं न होति प्रणुनोद दुष्प्रथाम् ॥ ४७ ॥

तदर्पितान्याभरणानि सादरं शयद्वयेनेव चकास्ति दर्शयन् ।
किरीटमञ्जीरमुखानि भक्तयोः स रङ्गराण्नारदराक्षसेन्द्रयोः ॥ ४८ ॥

अलंक्रियाप्रेम यदब्धिकन्यकाविभोः प्रसिद्धं तदयं विशां पतिः ।
अमुष्य रङ्गाधिपतेः समर्पयन्नपूरयद्भूरि विभूषणानि सः ॥ ४९ ॥

महाग्रहारान्कलयन्महीतले नृपालमौलिर्निजनाममुद्रितान् ।
प्रकाशते स्म प्रतिशुक्रवासरप्रवर्तिताम्भोजमुखोपरिग्रहः ॥ ५० ॥

असावथासादयदच्युताधिपो मुदा कदाचित्स तु मूर्तिमाम्बया ।
निरन्तरस्यन्दिमरन्दनिर्वृतद्विरेफमन्तःपुरकेलिकावनम् ॥ ५१ ॥

इहागमौघैः सुमनोमनोहरैरुपासितं यत्किलतवोपलालनम् ।
सदा विधूयापि सहत्यहो कथं मधुव्रतानां मधुपारणोत्सवम् ॥ ५२ ॥

मदुद्भवानां विततिर्महीरुहा फलान्यजस्रं फलतीति यन्महो ।
पदे पदे किं पनसाङ्घ्रिसंभवत्फलापदेशात्फलति स्वयं मुदा ॥ ५३ ॥

सुगन्धिभिः केऽपि सुमैः फलैः परे रसोत्तरैः केचन सौरभैर्निजैः ।
द्रुमा लसन्तीति यदिक्षवः स्वतो वहन्ति माधुर्यमदो विलक्षणाः ॥ ५४ ॥

फलप्रवालप्रसवैर्मनोहरो यदीयचूतः सुममेकमेव मे ।
सुगन्धि सर्वस्वमितीव तद्वहत्यनात्तगन्धं मधुपेन चम्पकः ॥ ५५ ॥

रसामृताया वकुलस्य चोर्जितं
रसोत्तरत्वं समवाप्य सौरभम् ।
फलानि पुष्पाण्यपि किं तयोः सुमैः
फलैश्च यत्र स्थगयन्त्यचारुताम् ॥ ५६ ॥

अपुष्पभावो वरमस्तसौरभप्रसूनताया इति पुष्पवर्जितम् ।
फलैर्युतान्यत्पनसानवेक्ष्य किं फलन्ति रम्भाश्च तथैव काश्चन ॥ ५७ ॥

जलेन रत्नान्यपि रत्नगर्भया
समञ्चितान्यङ्घ्रिपतास्वभावतः ।
निपीय पक्वानि फलेषु तानि किं
निरन्तरं यत्र वहन्ति दाडिमाः ॥ ५८ ॥

स्वकान्तिचौर्येण महीगतां वधूस्तना हरिद्रां परिचूर्ण्य बिभ्रते ।
इतीव कैरैरिदमाकृतिर्यतः फलावली मेघपथे निगूह्यते ॥ ५९ ॥

उदीच्यमूलानि कृशोदरीकचा यदुद्भवानि स्वसमाकृतीन्यपि ।
पिधाय रक्षन्त्यधिगर्भमत्र तन्निदानमेषां निजनामधारणम् ॥ ६० ॥

तमालतालीकृतमालमालतीमुकुन्दचिञ्चामुचुकुन्दचन्दनैः ।
महासहाकेसरनागकेसरध्रुवाद्रुमाश्वत्थकपित्थकंदलैः ॥ ६१ ॥

कुरण्डपुण्ड्रेक्षुजयेक्षुरक्षुमाजटाझटाब्रह्मजटाकुटन्नटैः ।
रसालसालप्रियसालमल्लकीरसामृतैलातिलकैर्यदेधते ॥ ६२ ॥

मणीचतुष्कोष्वधिनर्मभूधरं महीरुहश्रेणिषु वेदिकासु च ।
अमुष्य तस्मिन्वसतोऽभवत्प्रियं वने सज्ञानेरवनेरधीशितुः ॥ ६३ ॥
दिशा दशाना युगपद्विलोकने धृतं धरण्या नवहीरकल्पितम् ।
अनल्पमादर्शमिवात्र भूपतिः सरो निरैक्षिष्ट स किंचिदग्रतः ॥ ६४ ॥
त्वदीयनैकद्रुमपुष्पधूलिभिर्न शोषय व्योमनदीं प्रियामिति ।
अजस्रमुद्यानमदो निषेवितुं नियुक्तमम्भोनिधिनेव नन्दनम् ॥ ६५ ॥
तरङ्गडोलाम्बुजतल्पशायिनस्तनूभुवो लालनतत्पराशयौ ।
महीपतिस्तत्र मरालदम्पती विलोकयन्नाह विलोललोचनाम् ॥ ६६ ॥
तनूजभाग्यं सुतनो तदेनयोर्विहंगयोरत्र विलोकयाधुना ।
बिडौजसोऽपि स्पृहणीयमेधते विभुत्वमुर्व्यां न हि यद्विलम्बनात् ॥ ६७ ॥
विभुत्ववैदग्ध्यविवेकशालितामुखैर्गुणैर्विष्टपमोहनैरपि ।
न साधनीयो बत नन्दनोदयस्तपोभिरेवापि तु धन्यतात्रहैः ॥ ६८ ॥
अलोचनद्वन्द्वमिवाननं नृणामलब्धसत्पात्रमिवापवर्जनम् ।
उपेक्षितव्यङ्ग्यमिवोक्तिगौरवं सदप्यसत्कल्पमसत्सुतं कुलम् ॥ ६९ ॥
जराविशीर्णाः क्रमशः शरीरिणस्तपोभरैरेव रसायनैरिव ।
नवीभवन्तो भुवि नन्दनात्मना प्रवाहनित्याः प्रभवन्ति केचन ॥ ७० ॥
तनूभवैरेव दशा तनूमतां कुलेन येषां कुशलं विलोक्यते ।
हठादमर्त्याननपत्ययोग्यतान्दिवो धरित्रीमवतारयन्ति ते ॥ ७१ ॥
रुजाक्षुधास्वापजराद्यदूषितः स्थितिक्रमो यस्त्रिदशैकगोचरः ।
स भूतले नेति जनो न खिद्यते ततोऽपि मान्यैस्तनुजोपलालनैः ॥ ७२ ॥
दृशं चिरात्पित्र्यधमर्णतावधिं दृढं निमील्य प्रतिबन्धकास्तरे ।
स्वपन्तमुद्बोधयति स्वमन्वयं कदानुकूल्यं कलयन्विधिर्मयि ॥ ७३ ॥
प्रतिबिम्बितमात्मरूपमेक्ष्य प्रतिमाणिक्यतलं वयस्यबुद्ध्या ।
स्पृशति स्वसुते मुहुः कराभ्यां सुकृतः केऽपि जयन्ति मोदभाजः ॥ ७४ ॥
नर्मरजोधूसरितं नन्दनमङ्के वहन्ति धन्यतमाः ।
पतिरिव पयसामुदितं प्रतिदिनमुद्भासिलाञ्छनं शशिनम् ॥ ७५ ॥

क्रीडारजोधूसरितं किशोरमाश्लिष्यतां सादरमङ्कभाजाम् ।
काश्मीरसारैरपि गन्धसारैः कर्पूरपूरैरपि किं विधेयम् ॥ ७६ ॥

हासाङ्कुरं रोदनमप्यहेतु जातं मुखाब्जे सममावहन्तम् ।
जायापती जानुचरं कुमारं परामृशन्तौ खलु भाग्यवन्तौ ॥ ७७ ॥

एणीशाबदृशा सहेति विमृशन्क्षोणीपतिग्रामणी-
 र्वीणीं द्रागशरीरिणीमकलयन्नाणीयसे श्रेयसे ।
मा भैषीरयि किं विषीदसि महीत्राणाभिलाषी रमा-
 जानिस्त्वन्महिषीमणेर्यदुदयेषी त्वत्सुतः स्यादिति ॥ ७८ ॥

आकर्ण्य वाक्यमिदमद्भुतमच्युतेन्दुरानन्दतुन्दिलमविन्ददथान्तरङ्गम् ।
देवी च तस्य दिवसेष्वतिवाहितेषु द्वित्रेषु सा वपुषि दौहृदलक्षणानि ॥

ससंभ्रमं विरचितचम्पकाटवीसहस्रभूविबुधकुटुम्बसंभृते ।
भवस्थलप्रतिशरदप्रवर्तितस्फुरत्तुलापुरुषयशोविशोभित ॥ ८० ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
 प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
 जय करुणासनाथ रघुनाथ जनाधिपते ॥ ८१ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारोभवत्साहितो-
 साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
तार्तीयीकमपूरयत्कविवरः सर्गं मखिग्रामणी-
 रत्नाकृद्विद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ८२ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेयाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
तृतीयः सर्गः ।

# चतुर्थः सर्गः ।

शशलक्ष्मणं दिगिव शातमन्यवी कलशाब्धिवीचिरिव कल्पपादपम् ।
अदधादथाच्युतधराधिभूमणेरधिगर्भमर्भकमधोरलोचना ॥ १ ॥

उपभोक्तुमैहत तलोदरी विभोर्मनसा न वस्तु मधुरं यथापुरम् ।
उपदेशनादुदरवासमेयुषस्तनुसंभवस्य किमु धैर्यशालिनः ॥ २ ॥

वसुधासुधाकिरणवंशमौक्तिकं धरतेऽधुना तनुतरः स मध्यमः ।
इति चिन्तया किमितरन्नदङ्गकं भजति स्म कार्श्यमथ पाण्डुतामपि ॥ ३ ॥

सुतधाम मध्यममवर्धयन्परेऽवयवाः प्रदाय पृथुतां न तु स्तनौ ।
तदमी यशोधवलिमानमावहन्सुदृशस्तु तावपयशोऽग्रनीलताम् ॥ ४ ॥

विमलं कपोलयुगलं निसर्गतो विभसुभ्रुवः शरदिजाभ्रशुभ्रताम् ।
कलयद्दुकूलपटकल्पितावृतेर्मणिदर्पणस्य महिमानमानशे ॥ ५ ॥

विमले तदीयवपुषि व्यराजतां वशदौ कुचावतिविनीलचूचुकौ ।
अवगाढगाङ्गपयसोऽभ्रदन्तिनः कुवलावलीढमिव कुम्भयोर्युगम् ॥ ६ ॥

अवलग्नमेतदवनम्रमावयोः सविधे सदा किमधुना समेधते ।
इति सोढुमक्षमतयेव तत्कुचौ कठिनावतीव मुखकार्ष्ण्यमापतुः ॥ ७ ॥

उदरस्थभूपतिसुतोचितं पयः कुचकुम्भयोः स्म कुरुते चतुर्मुखः ।
परथा कथं रुचिपटीकृतावृती मुखमेचकत्वजतमुद्रितौ च तौ ॥ ८ ॥

नवगाधताविपयनाभिवापिकाविवरादिवार्दिमरमो विनिर्गतः ।
प्रवहन्बहिर्बहुतया मितोऽन्तरे रुरुचे तदीयघनरोमरेखिका ॥ ९ ॥

उदरस्थमेक्ष्य नृपचन्द्रमद्भुता चकितेव नाभिकुहरात्तमस्ततिः ।
स्तनशैलरुद्धसरणि स्थितान्तरे घनरोमराजिमिषतो नतभ्रुवः ॥ १० ॥

उपगूहने सुतमणेरुदेष्यतश्चिन्चेत्क्वयाच्युतनृपालशेवधेः ।
प्रतिभन्त्स्यतीति परमाणुमध्यमा बिभराम्बभूव न विभूषणे स्पृहाम् ॥ ११ ॥

सुतदर्शनोत्सवसुखातिरेकतो वपुषो न गौरवपुषो विभूषणम् ।
अनुरूपभूयमयते पुरेति किं विरलादरात्र विलास भामिनी ॥ १२ ॥

दयिता नृपस्य गतदौहृदश्रमा दधती तनूमुपचिता ततः क्रमात् ।
व्यपनीतशैशिरदिनव्यथा यथा प्रसवोन्मुखा व्यतपत प्रतानिनी ॥ १३ ॥
अखिलेषु मामवयवेषु जानते बत षष्ठमानपदवीमुपाश्रितम् ।
इति मध्यमं नु हरिणेक्षणामणेः प्रथमप्रमाणपथमानशे क्रमात् ॥ १४ ॥
वयसाधिनाभिहृदतोरमर्पितं वलिजालमाहृतबलेन मध्यमः ।
अत एव कार्श्यमवधूय स क्षणाद्ववृधेऽधिकं क्षितिवलारिसुभ्रुवः ॥ १५ ॥
स्तनयोर्युगेन धरणीबिडोजसो ववृधे तथा वनजलोचनामणेः ।
जठरेशयस्य जलराशिमेखलाभरणे शिशोः परिचयो यथा भवेत् ॥ १६ ॥
वदनं श्रमेण विनतं वधूमणेः प्रतिबिम्बितं स्म कुचयोः प्रकाशते ।
स्थितमातपत्रयुगलं सितं शिशोरुपरीव नेतुरुदरान्तरस्थितेः ॥ १७ ॥
तरले नराधिपतलोदरीमणेरपटोः श्रमादरुचतां दृशौ मुहुः ।
अधिगर्भमर्भकममुं स्थितं कदा न्ववलोकयाव इति तृष्णजाविव ॥ १८ ॥
श्वसितं दृशोस्तरलता पदे पदे स्थितिरप्यभूद्यदतिदौहृदश्रमात् ।
तदिदं वधूजठरशायिनः शिशोर्धरतो भुवो वलयमस्य गौरवम् ॥ १९ ॥
अवलम्ब्य भूपशिशुमात्मदभ्रतामजहात्परं न बलिसेवितामपि ।
अवलग्नमायतदृशः स्वतः कृशोऽप्ययते न किं भुवि जनाधिपाश्रयात् ॥ २० ॥
तरलीभवल्लुलिततारकाञ्चिते वदनासिताम्बुरुहिणीकुटुम्बिनि ।
अभवद्गुरु श्वसितमक्षमाभवं हरिणीदृशः किमिदमद्भुतावहम् ॥ २१ ॥
प्रमदामणेरतिमृदोः स्वभावतः प्रमदाय दौहृदकृता व्यथाप्यभूत् ।
फलमायती सुचिरवर्ति कल्पयन्भवति श्रमोऽपि हि सुखाय देहिनाम् ॥
वहते पुरा वलयवाहमर्भको जठरेशयो झटिति दोष्णि मामिति ।
अमुमन्तरीक्षितुमगाहत क्षितिर्ललनोपयुक्तनिजमूलवोपधेः ॥ २३ ॥
जठरेशयस्य जगतीवलासुहृत्कुलभूषणस्य गुणवैभवोचितान् ।
स्वदमानचापशरसोदरेक्षणामणिराससाद विविधान्मनोरथान् ॥ २४ ॥
प्रमदा नृपस्य भवनाङ्गणद्रुमप्रसवग्रहासहनपाणिपल्लवा ।
समितिक्षितौ दृढशरासकुण्डलीकरणे मुहुः कलयति स्म कौतुकम् ॥ २५ ॥

तरितुं विहारवनसालमञ्जरीमधुसारणीमनिपुणा मनागपि ।
उदकण्ठत द्विषमुदन्वदन्तरश्रयिणं नियन्तुमबला धरापतेः ॥ २६ ॥
मणिशृङ्खलाविधृतहेममञ्चिकामधिरोढुमीषदपि योषिदक्षमा ।
हरिदन्तराणि विजयाय घोटिकामधिरुह्य शश्वदटितुं मनो दधे ॥ २७ ॥
उपदीकृते निजसखीभिरुत्पले श्रवसोर्विधातुमपि चञ्चलेक्षणा ।
अपटीयसी निखिलमब्धिमेखलावलयं भुजाशिरसि वोढुमैहत ॥ २८ ॥
अतिकोमलप्रसवकन्दुकाहतिस्मरणेऽपि पाटलशयाकुलोदला ।
अभिहन्तुमैच्छदबला कठोरयोः करपल्लवेन करिकुम्भयोर्युगम् ॥ २९ ॥
बलिनिग्रहं कृतवतोऽपि वञ्चनात्कुहनावटोः परमरालकुन्तला ।
अभिनन्दति स्म दरहासतो द्विषन्नगरप्लुपं प्रमथनाथमेव सा ॥ ३० ॥
सवयोनियोगवचनेऽपि सालसा धरणीवलाहिततलोदरीमणी ।
निमिषादचीकमत निर्भरोद्भवद्रसगर्भिता रचयितुं शतं कृतीः ॥ ३१ ॥
मृगलोचना मृदुलमुत्तरीयकं दधती कथंचन धराबिडौजसः ।
विनिधाय बाहुशिखरे विपञ्चिकामनिष्ट वादयितुमादरं मुहुः ॥ ३२ ॥
महिलामणी भृतमरालसंसदे वितरीतुमप्यकुशला बिसाङ्कुरम् ।
कनकाचलं करतलेन गृह्णती विदुषाममूद्वितरितुं स्पृहावती ॥ ३३ ॥
समये ततः समुचिते मुदावनेः कमनेन पुंसवनकर्म निर्ममे ।
प्रमदा च तेन परिपोषिता यथा वरदोहदेन सहकारवल्लरी ॥ ३४ ॥
तनुयानधर्मपतयोऽधिमध्यमं तदधीश्वरेण सह संगता यदा ।
असविष्ट नन्दनमसौ तदा वधूरवनीशितुर्विधुमिवाब्धिवीचिका ॥ ३५ ॥
अविनीतभूभृदपकीर्त्तिकल्पितं मलिनत्वमेष महिपालनन्दनः ।
अपनेष्यति स्वयशसेत्यवेत्य किं हरितः प्रसेदुरखिलाः कुतूहलात् ॥ ३६ ॥
परिपन्थिभूपतनुबन्धनालयात्स्वजनानसून्सपदि मोचयेत नः ।
अवनीन्द्रभूरयमितीव कौतुकादवलन्त मन्दमनिलस्तनंधयाः ॥ ३७ ॥
अमुना नृपात्मजनिना सनाथतामवनी दधाति तददोरजःकणान् ।
अपहृत्य नो गतिरनौचितीति किं व्यवलन्त वीतरजसः समीरणाः ॥ ३८ ॥

वितरिष्यति क्षितिविभोरसौ सुतः सतताश्रिका हृदि सपत्नभूभुजाम् ।
इति कौतुकादिव ववल्ग यज्वनां भवनान्तरे हुतवहः प्रदक्षिणम् ॥ ३९ ॥
अवनीवलारिननुजः समाश्रितानयमध्वरान्सपदि कारयिष्यति ।
भविता हविर्बहु ममेति कौतुकादधिवेदि हव्यभुगधत्त नर्तनम् ॥ ४० ॥
जठरं मदीयमवलम्ब्य दुर्मतीञ्जगतीकदर्थनकृतो महीपतीन् ।
विनिवारयेदयमितीव निम्नगाविभुराततान कुतुकेन गर्जनम् ॥ ४१ ॥
सुतजन्मनामनि शुभे तदा स्फुरत्पणवाद्यवाद्यरटितेन पाटितम् ।
जलजासनाण्डमपि भाण्डमत्रवीज्जगतः कलिग्रहपलायनोद्यमम् ॥ ४२ ॥
जयशङ्खदुन्दुभिमृदङ्गनिस्वनो जगतीश्वरस्य तनयोदयोत्सवम् ।
अवदत्तदा निखिलमन्तरं दिशां प्रददावमुष्य स च पारितोषिकम् ॥ ४३ ॥
अभिधाय जातमहमात्मजं विभोः पुरतो लभेय वसु पूर्णपात्रितम् ।
इति ये शशंसुरिममुत्सवं ततो वसु तैरवापि बहु वाञ्छितादपि ॥ ४४ ॥
धनमात्मलब्धमखिलं धरापतेर्वितरीतुरस्य विभुलाञ्छनं परम् ।
सितचामरादिकमदेयतां गतं तनुभूरयं तदपि चादित स्वयम् ॥ ४५ ॥
अयमर्भको जलधिगर्भमेयुषः प्रसभाद्विजित्य परिपन्थिनो हरेत् ।
अधिकेषु तेष्वलममीभिरित्यरीन्स मुमोच बन्धनगृहेषु संदितान् ॥ ४६ ॥
मह्निकाजलेन कृतमज्जनस्ततो मह्निकामुकः स धृतवान्नवांशुकम् ।
पुरतोवलन्निजपुरोहितः सुतं पुरतोषणोदयमियेष वीक्षितुम् ॥ ४७ ॥
सुतदर्शनादरणसूतचोदिते महति स्थितोऽपि कुहचिन्मनोरथे ।
प्रययौ कथं स तु पदैव सूतिकाभवनं तनूभवमहःकरम्बितम् ॥ ४८ ॥
शयितं प्रसूशयकुशेशयद्वये तनयं तमक्षिविषयं नयन्नयम् ।
मनुजाधिपः स मनुते स्म विस्मितो वटुमाद्यमेव वटपल्लवेशयम् ॥ ४९ ॥
निटिलावलम्बिकुटिलालकाङ्कुरं श्रुतिगामिगाक्षमतिपाटलाधरम् ।
लसमानचम्पकसमाननासिकं परिपूर्णपङ्कजरिपूल्लसन्मुखम् ॥ ५० ॥
महिरक्षणाख्यमखदीक्षणोचितं करयोर्ध्रुवं कलितमुष्टिबन्धनम् ।
अभिषिञ्चमानमवलोकनामृतैरधिराजमात्मजवतां समञ्जसा ॥ ५१ ॥

अनिमेषमीक्षितुरमुष्य बालकं प्रमदाश्रु यत्प्रतिरुरोध लोचने ।
पतितं तदास परभाग्यरोधिनः पतनं न किं परिणमेज्जलात्मनः ॥ ५२ ॥
अथ जातकर्म मनुजाधिभूरसावकरोत्स तेन शिशुरप्यरोचत ।
पवमानयागबहुमानितो यथा पवमानबन्धुररणीसमुद्भवः ॥ ५३ ॥
अमुमद्भुताकृतिमयं विलोकयन्नशरीरवाक्यमपि चानुचिन्तयन् ।
उचितं तयोरथ तनूजमुर्वरारमणश्चकार रघुनाथनामकम् ॥ ५४ ॥
अधिरोप्य बालमधिनर्मडोलिकामणिमञ्चसीममबला महीपतेः ।
ततचारुगीतिनिनदास्त्रपामगुः कलितादसीयकलकण्ठनिस्वनाः ॥ ५५ ॥
अधिमञ्चमस्य पुरतोऽवलम्बितो मणिगुच्छकः स्म महिमानमश्नुते ।
निजमण्डलान्मधुनिषूदनोऽवनीमयितोऽयमित्यवनिनंसतो रवेः ॥ ५६ ॥
अव्याजहासरुदिताञ्चितमीक्ष्यमाणदन्ताङ्कुरं तनुभुवो वदनारविन्दम् ।
आलम्बमानकुरुविन्दललन्तिकाकमाघ्राय शश्वदवनीन्द्रवधूरनन्दत् ॥ ५७ ॥
जगदञ्चति तेजसि स्वकीये किमयं वल्गति गेह इत्यमर्षात् ।
अजिघृक्षदनुक्षणं क्षितिक्षित्तनयः पाणितलेन दीपलेखाम् ॥ ५८ ॥
भुजान्तरेणाच्युतभूभृतः सुतश्चरन्स्वबिम्बोपरि रत्नकुट्टिमे ।
निपात्य कामं निजरूपनिर्जितं हठादमुष्मिन्नधिरूढवानिव ॥ ५९ ॥
आत्मीयबिम्बमवलोक्य मणीचतुष्के व्यास्ते क एष इति जानुचरः कुमारः ।
संताडयन्करतलेन तथैव तस्मिन्सद्योऽनुकुर्वति स रोपकषायितोऽभूत् ॥
अभिवृद्धिमुपेत्य बालकोऽसाववनौ द्वित्रपदार्पणं वितन्वन् ।
बलिशासनभङ्गमाकलय्य स्फुरति स्म प्रथमो वटुः पुरेव ॥ ६१ ॥
अवलम्बयतीषदेव धात्र्याः करमस्मिन्नपरे करानगृह्णन् ।
पदमञ्चति ते पदान्यमुञ्चन्विपरीता हि गतिर्विरोधभाजाम् ॥ ६२ ॥
नर्माद्रिमुद्गतमनोनरपालदुर्गं केलीसरस्तटवतीकमितारमेषः ।
बाहाङ्गदं मणिमयं वलयं च भूमेर्धीराग्रणीर्गणयति स्म धिया कुमारः ॥
प्रविकीर्णसिताभचूर्णरेणुः पदसंशीलितगन्धसारपङ्कः ।
परिणुन्नहिमोदपात्रजालो विभुसूनुः सदनाङ्गणे व्यहार्षीत् ॥ ६४ ॥

कटितटिकालुठत्कनकभूषणकिङ्किणिका-
क्वणक्वणितप्रतिध्वनिवहानवरोधगृहान् ।
इह विहरत्युतेत इति यात्युपमातृकुले
पितृमुदमातनोदथ कुतश्चिदितस्तनुभूः ॥ ६५ ॥

अधिगुरुसंनिधि क्षितिभृदक्षरबोधकृते
व्यधित तमायियासु विधिसंसृतिहंसमुदा ।
चरणविभूषणक्वणनसक्त्युपधेरुपय
द्विहृतिसरोमरालमनरालधियं तनयम् ॥ ६६ ॥

निजभुजबलयुद्धनिर्धूतवाराशिवासिद्विष
द्धरणिभृदवरोधदोधूयमानप्रकीर्णद्वय ।
प्रतिदिनरचितप्रबन्धप्रभावप्रशंसापर
प्रथितविबुधसंसदश्रान्तविश्राणनश्लाघित ॥ ६७ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जयकरुणासनाथ रघुनाथ जनाधिपते ॥ ६८ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहिती-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
तुर्यं मार्दवधुर्यमध्वरिवरः सर्गं समापूरय-
त्तत्राकद्वदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ६९ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तत्राजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।

अथ देशिकसंनिधेरतीव प्रतिभा राजशिशोरगात्प्रसादम् ।
अवलोकनतो यथा हिमांशोः सहजा सौरभसंपदम्बुजानाम् ॥ १ ॥

लिखनाय लिपेः कृतः पुरस्तात्सिकतावल्लितरत्नराशिरस्य ।
वरणाय वसुंधरेन्द्रसूनोरखिलेवाङ्कुरिता कला व्यकासीत् ॥ २ ॥

महिचन्द्रमसः सुतो मणीषु व्यतनोदेष कथं सुवर्णरेखाम् ।
उचितं प्रभवः किमुर्वराया बहुमाने भुवि वस्तु नो विदन्ति ॥ ३ ॥

प्रणवं लिखति स्म पार्थिवेन्दोस्तनयो भूमितले सुवृत्तलेखम् ।
इयदेव ममेदमब्धिकाञ्चीवलयं वोढुरिति प्रदर्शयन्किम् ॥ ४ ॥

अखिलानपि पञ्चषैरहोभिर्धरतो वर्णचयान्धरेन्द्रसूनोः ।
स्तुतिमस्य परम्परासुसिद्धः क्व चतुर्वर्णभृतिक्रमः सहेत ॥ ५ ॥

अलिखत्तनुभूरथाच्युतेन्दोः कठिनोभिः फलके क्रमेण वर्णान् ।
रणनिर्जितशत्रुराजवक्षोजयलेखाभ्यसने नु जातहर्षः ॥ ६ ॥

सममेव चतुर्विधं कवित्वं मतिराप्नोति पुरा महेन्द्रसूनोः ।
अमृतांशुशिशोरभीशुरेखा निखिलं दिग्विलयं यथा निशायाम् ॥ ७ ॥

समितिप्रियतापसः स योद्धुर्व्यतनोदस्य विपञ्चिकासु शिक्षाम् ।
परथा महतो विपञ्चिकाया पटुता किं प्रभवेन्नृपात्मजस्य ॥ ८ ॥

खुरलीभुवि भूभृतः कुमारः प्रचरन्रक्तपरागमेदुरायाम् ।
समदृश्यत शत्रुराजतेजःप्रकराधःकरणे दधत्पटुत्वम् ॥ ९ ॥

समदर्शि नृपात्मजः स शिक्षामहिधूलीमसृणं वपुर्दधानः ।
पतिरेष भविष्यतीति गाढं परिरब्धो धरयानुरक्तयेव ॥ १० ॥

महिजम्भविमाथिसंभवो द्राक्खुरलीस्तम्भतटाद्विजृम्भमाणः ।
प्रतिमल्लमसौ बलादगृह्णान्नरसिंहो दितिनन्दनं यथैव ॥ ११ ॥

स शिलावलयद्वयं शयाभ्यामुपरिष्टादयमुद्वहन्कुमारः ।
व्यवृणोदिव वारिराशिकाञ्चीवलयद्वन्द्वभृतौ बलं ममेति ॥ १२ ॥

अधिहोरफलान्तरे कुमारः समदर्शि क्षितिपाकशासनस्य ।
तपनान्तरवासतापशान्त्यै शशिनो बिम्बमिव श्रयन्मुरारिः ॥ १३ ॥
अवलम्बनमात्मबिम्बमस्य द्विषतामुष्णरुचिर्विशङ्कमानः ।
करकल्पितरत्नखेटदम्भादसिपुत्र्या सुतमाश्रयन्महोन्दोः ॥ १४ ॥
अवहद्धनुरात्मजेन भूमीकमितुः कुण्डलितं करावलेपात् ।
भुजसौधजयेन्दिरा पृषत्कच्छलवीक्षोचितजालकप्रभावम् ॥ १५ ॥
न परं धनुरेष नामयंस्तद्गुणमुर्वीपरिणीकुमारमौलिः ।
मुहुराप यदार्तिमुद्धतानामपि संदोहममित्रपार्थिवानाम् ॥ १६ ॥
करमुक्तममुक्तयन्नमुक्ते कलयन्नायुधमप्यमुक्तमुक्तम् ।
धरणीपरिणीतनूभवोऽसावधिकं चारभटैरथाभ्यनन्दि ॥ १७ ॥
रयधूतमरुद्वथाश्रयत्वप्रतिघात्फेननिभेन भक्ष्यमाणम् ।
प्रियमुज्झयितुं नताभिरङ्घ्रीनुडुभिर्नूपुरमौक्तिकैरुपेतम् ॥ १८ ॥
सरितां सुहृदा समावृतासौ मम धाव्या वितता मही न होति ।
पदलेखनतः प्रकाश्य भूमिं निजहेषामिषतो निवेदयन्तम् ॥ १९ ॥
चलतालुनिभेन चर्व्यमाणो
जवधूतः पवनः पुनः प्रयाति ।
श्वसितं व्यपदिश्य नासिकाग्रा-
दिति रोषादिव कम्पमानशीर्षम् ॥ २० ॥
अरुणाश्वजयार्थमुत्पतिष्णुं
द्युरिवाभीक्ष्णमुदञ्चिताग्रपादम् ।
सदृशा न हि ते तवेति वल्गा-
ग्रहिणा चाटुगिरेव वार्यमाणम् ॥ २१ ॥
अथ चामरतो हयोरसत्वोचितमग्रे चरतोपत्रोज्झमानम् ।
अधिरोहति सस्मितं हयानामवतंसायितमच्युतेन्द्रसूनुः ॥ २२ ॥
अयमाशु सरेति सूचयन्किं हयमास्फालयति स्म कंधरायाम् ।
स च सूचनमस्य बुध्यमानः सहसा यामि तथेति किं जिहेषे ॥ २३ ॥

तुरगो नृपसूनुचोदितो यत्खुरकोटीभिरजीजनद्रजांसि ।
गगनं स्थगयन्निव प्रयच्छद्गतिधूतस्य नभस्वतोऽवकाशम् ॥ २४ ॥
जननाथसुतेन चारितोऽश्वो जनयामास रजः पयोधिरोधि ।
गतिधूतमनोगृहायमाणक्षणदेशोदयकारणत्वकोपात् ॥ २५ ॥
जवनस्तदनुज्ञया स भूमेरधिकं व्योमनि किं हयश्चचार ।
निजनायकनित्यदानपाथःपरिपूर्णार्णवपांसुपातभीत्या ॥ २६ ॥
श्वसनः सह सैन्धवेन धावञ्जवहीनो न्यवृतन्नु तत्सकाशात् ।
चलता न पुरेव चामराणां जवनस्यास्य यतो जनेन दृष्टा ॥ २७ ॥
तुरगं किमधः सुराधिनेतुः स विधातुं दिवमुत्प्लुतः सवेगम् ।
पुनरेव ततो भुवं समागात्पदधूल्येव तदाहितं प्रतीक्ष्य ॥ २८ ॥
हृदयाभिमुखावनम्रवक्त्रः कविकाकर्षणतः स शश्वदश्वः ।
स्यदधूतमवेक्ष्य सौवचेतो हसितं व्यातत हेषया किमेषः ॥ २९ ॥
जवने स जनेशसूनुरस्मिन्नधिरूढो दृढमानमय्य शार्ङ्गम् ।
चतुरं विनिवृत्य हन्त पश्चाच्चललक्ष्यं व्यभिनच्छरेण सूक्ष्मम् ॥ ३० ॥
प्रतिपादनकार्मणं पयोधिर्मम तस्यापि महीन्द्रनन्दनोऽसौ ।
परिपूरयिता प्रदानतोयैरिति तं द्रष्टुमिवागतं पयोदम् ॥ ३१ ॥
वसुधां ककुबन्तवारणेन्द्रैर्विधृतामङ्गदनिर्विशेषमस्य ।
वहतोऽवनिपाकवैरिसूनोर्भृतियोग्यं बिरुदानकैरुपेतम् ॥ ३२ ॥
कमलां मम कुम्भकल्प्यमानस्थितिमन्तः सितरोचिरेष धत्ते ।
इति तस्य जिघृक्षयेव शश्वत्कलयन्तं प्रतिघात्कराग्रमुच्चैः । ३३ ॥
कलशाब्धिसुता धृतेरमुष्याः कलयेत्कोपमियं महीसपत्नी ।
इति तामपि मस्तके दधानं करधूतावनिधूलिकैतवेन ॥ ३४ ॥
वियदङ्गणविस्तृतात्मशुण्डालतमुद्धूय धरारजांसि शश्वत् ।
समताभ्रमदत्तमभ्रनागं समरायाह्वयमानमारवेण ॥ ३५ ॥
विधृतेयमिला विदारिता स्यात्कुलकूटस्थदिगन्तकुञ्जरेन्द्रैः ।
इति मन्थरमेव संदधानं पदमस्यां परिमृश्य किं कराग्रात् ॥ ३६ ॥

विरहेण समानविक्रमाणां करिणामात्मबलस्य का प्रथेति ।
श्वसितैरधिकैः स्वकुम्भमुक्ताः किमु मुक्ताः करशीकरान्किरन्तम् ॥ ३७ ॥
महसा स्वमहोमहेन्द्रसाम्यं भ्रमतां द्वेषिधराभृतां शिरःसु ।
न्यसितुं दधतं विनम्रिताग्रं पदमेकं त्रिपदीविलासदम्भात् ॥ ३८ ॥
रदनेऽभिमुखागतो लघिम्ना पदमाधाय महीपतेः कुमारः ।
अतिविक्रमिविक्रमक्रमोऽसावववतंसं करिणां समध्यरुक्षत् ॥ ३९ ॥
धरणीरमणाग्रणीतनूजो दृढमास्फालयत द्विपेन्द्रकुम्भम् ।
दुहितुर्वरणाय दुग्धसिन्धोः शयितायाः प्रतिबोधनं दधानः ॥ ४० ॥
विविधेषु महीविभोः कुमारो गतिभेदेषु स गन्धसिन्धुरस्य ।
पटुतां कलयन्प्रवीरवर्गैर्बहुधाश्लाघि महापराक्रमीति ॥ ४१ ॥
अथ जातु निजात्मजार्जितानां सकलाना स परीक्षिता कलानाम् ।
अयमासददच्युतावनीन्द्रो निजमास्थानपदं नृपावकीर्णम् ॥ ४२ ॥
कविवैणिकगायकायुधीयैर्महिपालैर्निजमन्त्रिभिश्च भूपः ।
स्वयमावसदासनं स तस्मिन्नयमावास्य यथार्हमासनानि ॥ ४३ ॥
विनयेन परान्विहाय सर्वानथ कैश्चित्सवयोभिरन्वितोऽयम् ।
रघुनाथविभू रयादयासीज्जनकास्थानमदो जनेन हूतः ॥ ४४ ॥
अमुमागतमच्युतावनीन्द्रादपरे तत्र कुमारमभ्यगच्छन् ।
तमवेक्ष्य स तेजसा निधानं जनकोऽपि स्थितिमात्मनो जगर्हे ॥ ४५ ॥
अखिलानभिगच्छतः सदस्यान्नृपसूनुः स यथापुरं निवेश्य ।
कृपणासुलभैः कृपावलोकैर्न्यवसत्तन्निकटे नृपाल्पपीठे ॥ ४६ ॥
मुदितो विमृशन्मुहूर्तमन्तः सकलानेष सभासदो विलोक्य ।
अतिविस्मयहेतुमच्युतेन्द्रो वचनं किंचन वर्णयांचकार ॥ ४७ ॥
सकलासु कलासु दुर्निरीक्षाः समिताबाततनुतामिताः परीक्षाः ।
तनयस्य सभास्थिता ममाद्येत्यनयद्वाक्यमदःश्रवःपुटानि ॥ ४८ ॥
अथ तस्य वसुंधरामरेन्द्रोरवतंसस्य पदेऽभिषिच्य वाचम् ।
भयविस्मययोर्बभूव मध्ये सकलस्तत्र सभासदां समाजः ॥ ४९ ॥

अमुमद्भुतबालमत्यपूर्वप्रतिभानं कमलासखं प्रतीत्य ।
प्रति तं विबुधाः पतिं जनानां प्रतिवाचामवदन्नयप्रधानम् ॥ ५० ॥

भवतो वचनस्य पार्थिवेन्द्र प्रतिवाक्ये वयमाः कथं प्रगल्भाः ।
निगदाम तथापि नीतिपद्यापथिकाग्रेसर पक्षपातभूम्ना ॥ ५१ ॥

बुधजीवनिधान बोधसिन्धो न निवेद्यं तव विद्यते नवीनम् ।
अवधारय पूर्ववृत्तमन्तः सकलं तद्वसुधासुधाशनेन्द्र ॥ ५२ ॥

कैङ्कर्येणानेककैदार्यसीमाग्रामारामान्संप्रदातुः कदाचित् ।
भूपाहं ते पुत्रतामाश्रयामीत्युक्तं स्वप्ने कामुकस्येन्दिरायाः ॥ ५३ ॥

किं च भार्यासमेतस्त्वं संचरन्गृहकानने ।
अशरीरि वचोऽप्येवमश्रौषीः खलु जातुचित ॥ ५४ ॥

आस्ता तदेतदवनीपरिणीरतीत्र
बालस्तवैष तनयः पटुता कथं वा ।
धर्तुं क्षमेत सकलासु कलासु साक्षा-
द्देवो न चेत्स वसुदेवकुलेऽवतीर्णः ॥ ५५ ॥

सकलासु पटुस्तवात्मजातः स कलासु क्षितिमण्डले न चान्यः ।
प्रभवेत्तदिमं परीक्षितुं कः प्रभवे तुभ्यमिदं न रोचते किम् ॥ ५६

बुधैरिति क्षितिपतिरेष बोधितः
स्मरन्पुरा स्मरजनकेन भाषितम् ।
तनूभवे झटिति ततान वैष्णवीं
मतिं जहौ मनसि कृता च मानुषीम् ॥ ५७ ॥

वीणानिक्वाणनायां विविधरसभृतादभ्रसंदर्भरीत्या-
मप्यास्थानीमनल्पां प्रकटय पटुतामास्थितानां धुरीति ।
उत्तंसीकृत्य नेत्रा स हितमभिहितं तेन तत्रातिधृष्टः
प्रत्याचष्टातनोमि त्वदुदितमहमित्यात्मजोऽपि प्रहृष्टः ॥ ५८ ॥

सकलासु कलासु पटो कपटोपायादिरहित समरहित ।
अवनेरवने दक्षिण दक्षिणसिंहासनाध्यक्ष ॥ ५९ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ६० ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहिती-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
सोऽयं पूरयति स्म पञ्चममिमं सर्गं मखिग्रामणी-
रत्नाकृद्विद्वद्भुतकरे साहित्यरत्नाकरे ॥ ६१ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
पञ्चमः सर्गः ।

---

# षष्ठः सर्गः ।

आज्ञाममुष्य शिरसा तरसा दधानः प्राज्ञाग्रणीः प्रसवदामसखीं सभायाम् ।
अत्राभिलाषमुपवीणयितुं धरित्रीवृत्राभियातितनयो वितनोति स स्म ॥ १ ॥

वीणानिनादनकृते विहितां तदानीमालोच्य तस्य धिषणामधिचेतसेन ।
आनेतुमेतदुपगूहनभाग्ययोग्यां प्राद्रुवन्परिजना जवना विपञ्चीम् ॥ २ ॥

गाङ्गेयक्लृप्तककुभां घटितोपनाहां स्निग्धप्रवालगतसिक्थकसक्तपर्वम् ।
वीणां निचोलितविचित्रपटावलम्बकोलम्बकामदित कोऽपि नृपात्मजाय ॥

पाणावथो धरणिपाकभिदात्मजेन वीणामुना विरचिता सदसि व्यलासीत् ।
गम्भीरगानकपटाम्बुनिधिं तरीतुं तुम्बीफलाकलितहेलिकयष्टिकेव ॥ ४ ॥

वीणां निचोलितपटाद्विभुनन्दनोऽसावादाय तन्त्रिगुणमभ्यमृशत्नखाभ्याम् ।
तुम्बीफलोदरकरण्डकशोभमानसौरभ्यशालिनवशङ्कुमदार्द्रिताभ्याम् ॥ ५ ॥

वीणां लघुं विविधरागवतीमतीव शून्यान्तरामपि विदन्सुमना व्यधत्त ।
अङ्के किमेष रघुनाथविभुर्गुणाढ्यामिक्ष्वाकुवंशजनिता सहजेति मत्वा ॥

उच्छिष्टमञ्चितवतीं मधुनः सरागा-
मुर्वीन्द्रभूः कथमधात्परिवादिनीं सः ।
प्रायेण वस्तुषु गुणान्परिशीलयन्तः
सन्तः परं न गणयन्ति सतोऽपि दोषान् ॥ ७ ॥

आहत्य हस्तनखरैरवकर्ण्य वारं वारं श्रुतीरवनिवासवनन्दनोऽसौ ।
उत्पादयन्सुदृढतामुपनाहकोले तन्त्रीर्व्यधत्त सदृशक्वणनाः श्रुतीनाम् ॥ ८ ॥

अभ्रूविभङ्गमनरालसिरालकण्ठमस्पन्दगात्रमधितन्त्रि चिरेण नाटीम् ।
रागेषु नेतुरनुरागविधानहेतुमारब्ध वादयितुमद्भुतमर्भकोऽयम् ॥ ९ ॥

आरूढषट्छ्रुतिमसावृषभं तथैव संधाय धैवतमथान्तरसंज्ञकं च ।
गान्धारकं तदनु काकलिकानिषादमन्यानवैकृतगुणैरयितानतानीत् ॥

वीणागुणान्प्रथममेव विमृश्य सोऽयं षड्जेऽपुषत्तदनु मध्यमपञ्चमाभ्याम् ।
भूयांसि भूपतनुभूः स्फुरितानि ढक्काढात्कारडम्बरविडम्बनलम्पटानि ॥ ११ ॥

पृष्टं निशम्य सदसि स्फुरितं तथैव ये विस्मयं ययुरतीव सभासदस्ते ।
अस्यावलोक्य पटुतामहहा विपञ्च्यामग्रे भवन्तु कथमेतदहं न जाने ॥ १२ ॥

चाञ्चल्यमाश्रयत चामरधारिणीना
बाहालता मुखरता वलयानि तासाम् ।
सामाजिकानहह निश्चलता तदानीं
तेषा मनांसि घनतानरसार्द्रता च ॥ १३ ॥

सद्यस्तनाग्रनखराहतिभिः सभायां
पुंसा परेण भुजमध्यकृता विपञ्ची ।
आक्रोशमावहदनिन्दितवंशभाजां
स्थाने हि तज्जगति सद्गुणशालिनीनाम् ॥ १४ ॥

आरभ्य तारगतषड्जमथावरुह्य
मध्यर्षभावधि तदादि पुनः कुमारः ।
आतारषड्जमधिरुह्य च वादयित्वा
तानान्यथेच्छमजहादधितारषड्जम् ॥ १५ ॥

आरभ्य मध्यगतपञ्चममुर्वरेन्दो-
रारुह्य तारगतपञ्चममात्मजोऽसौ ।
आमध्यषड्जमवरुह्य च वादयित्वा
तानान्यथेच्छमजहादधिमध्यषड्जम् ॥ १६ ॥

आरभ्य मध्यगतपञ्चममेव पश्चा-
त्तारर्षभान्तमधिरुह्य ततः क्रमेण ।
मध्यर्षभान्तमवरुह्य च वादयित्वा
षड्जेऽजहादवनिपालतनूभवोऽयम् ॥ १७ ॥

ढालाभिधानि लुठनान्यथ ढौकितेषु
तन्त्र्यां स्वरेष्वहह तत्समयोचितेषु ।
हारो लुठन्नुरसि किंचिदमुष्य नूनं
तल्लक्षणं क्षणमनक्षरमाचचक्षे ॥ १८ ॥

अङ्गानि कानिचिदयं किल पञ्चमस्था-
    द्यादीनि तावदधितन्त्रिगुणं पृथित्वा ।
सद्यस्तनानि नृपनामसमञ्चितानि
    गीतानि वादयति स स्म कृती कुमारः ॥ १९ ॥

गीत्वा पुरः किमपि वादनमादधान-
    स्तन्त्र्याममुष्य धरणीन्द्रसुतो व्यलासीत् ।
आहत्य हस्तनखराञ्चलतो विपञ्चीं
    किं कल्पयन्सरसगीतिकलासु शिक्षाम् ॥ २० ॥

मग्नेषु तस्य मनुजाधिपतेः सुतस्य गानामृताम्बुनिधिवीचिषु गायनेषु ।
आलम्बनात्कनदलाबुविपञ्चिकानामत्रोदजृम्भिषत केचिदतिप्रवीणाः ॥

ढालः कथं कथमहो स्फुरितं कथं वा
    कम्पः कथं हि तदमुष्य विशिष्य गानम् ।
त्वं पश्य पश्य तदिदं त्वमिति प्रवीणै-
    रस्तूयतायमवनीपरिणीकुमारः ॥ २२ ॥

अस्तोकमस्य निपुणत्वमिदं विपञ्चयां
    कः स्तोतुमर्हति विभो तव नन्दनस्य ।
इत्युक्तमेष कलयन्निति वैणिकेभ्यः
    प्रत्युत्तरं धरणिवृत्रभिदाबभाषे ॥ २३ ॥

निक्काणनासु निपुणत्वमिदं विपञ्चया
    न क्वापि विस्मयकरं शिशुनापि वेद्यम् ।
साहित्यमेव दुरवापमहो यदस्य
    सौहित्यलेशमपि वेत्ति न वा महेशः ॥ २४ ॥

एतद्विभाति सुमहत्तरयन्त्रगात्र-
    चातुर्यमत्र शरदां शतमेव लोके ।
आकल्पकल्पसुषमा श्रवसोर्बुधाना-
    माकल्पमर्पयति किं तु कवेः प्रबन्धः ॥ २५ ॥

संदर्शय स्फुरदमन्दरसप्रबन्ध-
संदर्भमर्भक तदद्भुतभावगर्भम् ।
कीर्त्तिं बिभर्ति कृतिनायकयोर्यदस्य
कल्पावधि क्षितिरनल्पदुकूलकल्पाम् ॥ २६ ॥

विख्यातिमानपि विभुः स्वत एव लोके
काव्येन कीर्त्तिमहतां सुकवेरुपैति ।
रामो दशस्ववतरेष्वपि राजतेऽस्मा-
बद्यापि कीर्त्तित्रपुरादिकवेर्निबन्धात् ॥ २७ ॥

तस्माद्विधेहि सुविधे मम तात तावद्यत्नं विभोर्यदुपतेश्चरिते प्रबन्धम् ।
माकन्दकन्दलदमन्दमरन्दबन्धुं त्वं पारिजातहरणं त्वरया निबन्धुम् ॥ २८ ॥

उर्वीविलासुहृदसौ गिरमुज्जगार
ज्योत्स्नाभरैरिति सुतं प्रति दन्तपङ्क्तेः ।
तामस्य सूनुरपि तत्र वतंस्य सोऽयं
काव्यं तदारभत कर्तुमतित्वरावान् ॥ २९ ॥

यामद्वयेन यदुनेतरि पारिजात-
माज्ञोहरत्सरसमच्युतभूपसूनुः ।
काव्यं तदत्र विबुधैस्तु कथं कथंचि-
दालेखि चित्रमवधाय फणीन्द्रकल्पैः ॥ ३० ॥

तादृक्षमेक्ष्य शतजन्मतपोविपाकं
पाकं स्वमप्रतिहतप्रतिभाक्रमेषः ।
भूमीविभुः कुतुकनामनदीभुजंगे
खेलन्मनाः सदसि केवलमेव तस्थौ ॥ ३१ ॥

स्मृत्वा मदुक्तमवनीस्मृतिभूरशेषं पश्याधुना प्रकटितस्वहरिस्वभावम् ।
एतादृशं सुतमिति स्फुरदेककण्ठ्यमुच्चैर्मनोषिपरिषद्दुदपादि घोषः ॥ ३२ ॥

आरोपयन्नृपतिरात्मजमेनमङ्कमेणाङ्कमम्बुधिरिवात्तकलाकलापम् ।
स्वान्याननतिश्रमविदूरमुदूढहर्षो मूर्धानमस्य स मुहुर्मुहुरप्यजिघ्रत् ॥ ३३ ॥

जातोऽहमस्य सुकृतो जननेन चेत्त्व-
सर्वंसहाशतमखो जनको मदीयः ।
मूर्ध्यम्बिका च जननी मम हन्त मोहा-
दत्यल्पमुक्तमिदमद्य मदन्वयोऽपि ॥ ३४ ॥

एवं वदंस्तनयमेष कृपारसौघै-
र्जाताभिषेकमपि तं जगतीबिडौजाः ।
तत्राभ्यषिञ्चत मणीभिरसौ सभाया-
मासीत्स एव वसुधेशपदाभिषेकः ॥ ३५ ॥

अस्याच्युताभ्युदयपूर्वशतप्रबन्ध-
कर्तुर्महीतलशतक्रतुरात्मजस्य ।
अश्वोरसानि गजतां स्वविभूषणानि
देशान्बहूंश्च दयमानमना व्यतारीत् ॥ ३६ ॥

प्रेम्णां भरेण पृथिवीतलमीनकेतो-
रानन्दनैश्च जगतां विबुधावलीनाम् ।
आशीर्वचोभिरपि चन्द्रमसः कलेव
गात्रं तदीयमभजत्क्रमशोऽभिवृद्धिम् ॥ ३७ ॥

अज्ञातशिल्पिकरणश्रममप्रसक्तभूयोवतारणमभूतशरीरभारम् ।
तत्तादृशस्य धरणीपरिणीसुतस्य तारुण्यमाभरणमेव विपर्ययंसीत् ॥ ३८ ॥

लेखास्तता धरणिलेखवरात्मजस्य
भान्ति स्म फालफलके परिणाहभाजि ।
भाग्याक्षराणि लिखता बहलानि पूर्वं
पद्मासनेन लिखिता इव पङ्क्तिशुद्ध्यै ॥ ३९ ॥

नेतुः सदा परिचितश्रुति नेत्रयुग्म-
मस्यादधाति नितरामनुरागवत्ताम् ।
इत्येतदन्तिकमिता भ्रुकुटी न वा कि-
माटीकते स्म चटलत्वमतीव भीता ॥ ४० ॥

स्पर्धावशादिव परस्परमायतत्व-
मा बिभ्रती व्यरुचतामदसीयनेत्रे ।
दृष्टं श्रुतं च सकृदप्यवधारयामः
सर्वं सदा वयमिति श्रवणे नियन्तुम् ॥ ४१ ॥

कान्तानुरागकलिताधरसंनिधानादच्छापि तस्य गुणमावहतु द्विजालिः ।
आलम्बितश्रुतिपथं कथमक्षियुग्ममस्यानुरागमधितावनिपालसूनोः ॥ ४२ ॥

नासात्मना किमपि तस्य नरेन्द्रसूनो-
र्मुग्धं सुवर्णसुममञ्चति मुख्यभावम् ।
इत्यस्य सख्यमिव कर्तुमितैर्द्विरेफैः
श्मश्रुच्छलेन वदनं चकितैः परीतम् ॥ ४३ ॥

आसञ्जितामधिसुधाकरमात्मनाथे बाहुद्वयीं परिहसन्ति निशाकृशाङ्ग्याः ।
लावण्यसिन्धुरमणोचितशैवलानि श्मश्रूणि तस्य वदने सरलान्यभूवन् ॥

अत्युन्नतत्वमतिमासलता च बिभ्रदंसद्वयं श्रियममुष्य विभोरपुष्यत् ।
वीरेन्दिराविहृतिमन्दिरबाहुभर्महर्म्याग्रसंघटितहाटककूटरूढाम् ॥ ४५ ॥

बाहार्गलायुगलमस्य युगप्रमाणमाजानुलम्बितमराजत राजसूनोः ।
ऊरू यथोचितमुपाश्रयतोऽवधिं किमाज्ञापयत्समधिकांसलतागुणस्य ॥४६॥

बाहुद्वयोमभजत क्षितिपालसूनोरत्यायतत्वमतिमानुषमाः कथं वा ।
ब्रूमस्तदस्य हरिनामपुरावतारबाहाचतुष्टयमजायत बाहुयुग्मम् ॥ ४७ ॥

अध्यास्य यस्य दुरवापपयःप्रवाह-
मध्यावनौ परमहीपतयः प्रथन्ते ।
तन्निग्रहे स च पयोधिरियान्ममेति
शंसन्निवायमधिजानु भुजावधत्त ॥ ४८ ॥

प्रायः समुन्नमनकर्मणि पादनम्र-
नानान्तरोपनरनाथकिरीटघर्षम् ।
संचिन्त्य भाविनममुष्य शफद्वयेन
काठिन्यमाप्यत तदाहुरकर्मसिद्धम् ॥ ४९ ॥

क्षोणीभृतो विदलयन्कुलिशो पुराभिं
प्राप्तान्नियन्तुमपटुर्भुवि यः स भूयः ।
तन्निग्रहाय धरणीशतनूभवोऽभू-
द्वज्रं करे स वहते शुभलक्षणं यत् ॥ ५० ॥

आकारतो न परमस्य कवाटिकायाः
साधर्म्यमाबिभृत चारु भुजान्तरालम् ।
मन्त्रं मनीषितफलोदयमात्रगम्यं
यत्संवृणोत्यनिशमन्तरितोऽपि हेतोः ॥ ५१ ॥

वक्षःस्थलान्निपतिता वनमालिनः स्या-
न्निद्राजुषो नियतमङ्गविवर्तनेषु ।
पर्यङ्कितं फणभृतीति रमा समागा-
द्भूमीपुरंदरसुतस्य भुजान्तरालम् ॥ ५२ ॥

अङ्गानि वृद्धिमभजन्नखिलानि तस्य
कार्श्यं पुनश्च वहति स्म कृशं वलग्नम् ।
अङ्गीकृतोऽपि विधिना विभुना सदैव
किं मध्यमो बत जहाति निजं कृशत्वम् ॥ ५३ ॥

ऊरुद्वयेन महतोपगतस्तनीया-
ञ्जानुप्रदेश इति तस्य कृशं वलग्नम् ।
स्फीतो रसाक्रमणभीतिवशादिवात्म-
सीमानमातनुत रोमलतात्तचिह्नाम् ॥ ५४ ॥

अङ्गादतीव गुरुणोऽप्यवलग्नमस्य
कार्श्यं महत्कलयदाश्रयत प्रशंसाम् ।
अस्मादपि स्वयमवाप्तुमिवाधिकं तां
गुल्फद्वयं नयनगोचरतामहासीत् ॥ ५५ ॥

पद्मं निजद्युतिमुषं पदयुग्ममस्य नाताडयिष्यत यदि क्षितिनाथसूनोः ।
तस्मिन्सुकोमलतले दृढघातजाता तद्रेखिकाप्यरुणिमा न तदालगिष्यत् ॥

आकर्णपूर्णदृशमंसलितांसदेशमापीनकंधरममन्दरसोक्तिपूरम् ।
आजानुलम्बिभुजमद्भुतरूपभाजमारूढयौवनमसेवत कन्तुरेनम् ॥ ५७ ॥

आजानरम्यमपि रूपममुष्य नेतु-
रुत्तेजितं तरुणिमोदयनेन भूयः ।
भङ्गं नयद्भुत रतेः पतिदेवतात्वं
कासां मनांसि हरति स्म न कामिनीनाम् ॥ ५८ ॥

तारुण्यदृप्तमवनीशतनूजरूपं
चेतो हठादपहरच्चपलेक्षणानाम् ।
आक्षिप्य नीतिपथमाश्रितमस्य बाहु-
श्रुत्यं व्यधत्त नितरां विषयव्यवस्थाम् ॥ ५९ ॥

शक्रादयो दिगधिपा महिचन्द्र सूनो-
रस्यांशभूयमवहन्त न सैष तेषाम् ।
एकैकदिक्परिवृढत्वमिहाखिलाशा-
नाथत्वमप्युदयति स्म न किं निदानम् ॥ ६० ॥

ऐक्यं विधाय हरमाधवयोः सयत्नमत्रापरेण वपुरर्धयुगेन धात्रा ।
दुर्गाश्रयो विभवदृप्तबलिप्रमाथी सृष्टो नु भूतलसितद्युतिसूनुरेषः ॥ ६१

वैदुष्ययौवनविभुत्ववराकृतित्वमुख्यैर्गुणैरविनयं महुरुद्भिरद्भिः ।
अन्यत्र तैरवनिनेतुरमुं तु सूनुमासाद्य हन्त विनयः समदर्शि नित्यम् ।

लग्ने शुभंयुनि रतोशसतोर्ष्यरूपधेयेन सज्जनविधेयधियाथ तेन ।
पाणावकारयदसौ परिणीरवन्याः पुत्रेण नैकधरणीपुरुहूतकन्याः ॥ ६३ ॥

पुत्रेण स स्वसदृशेन भुवं पयोधिवेलावधिं वितपते नृपतिः स्म शासत् ।
प्रलेयशैलतनयापतिरात्मभाग्ययोग्येन तारकयुधेव तनूभवेन ॥ ६४ ॥

जातु क्षमामथ विजापयितुं समस्तां
नानानरेन्द्रविधृतां निजनन्दनेन ।
संचिन्तयन्स नृपतिः श्रवसोरतानो-
त्कोलाहलं कमपि भूपकुलाङ्गनानाम् ॥ ६५ ॥

भो रक्ष रक्ष सहसा भुवनैकवीर विद्राविता निजपदाद्भिमतैस्त्वमस्मान् ।
नेपालनेतुरवरोधनितम्बवत्यः पत्या वयं पदमिताः शरणं तवेति ॥ ६६ ॥

कार्पण्यगर्भमवकर्ण्य तु कर्णरन्ध्रनाराचकल्पमुदितं नतमध्यमानाम् ।
आधारमात्रहृदपारकृपारसार्द्रं वाचां हृदेष निमिषं वसुधासुधांशुः ॥ ६७ ॥

ते नागपट्टणगतेन मया निरस्ताः पूर्वं समेत्य पुरमस्य समुद्रखेयम् ।
नेपालभूविभुमतो निरकासयन्किं भङ्क्ष्यामि तत्पुनरहं युधि पारसीकान् ॥

नेपालभूविभुमसौ निजभर्मगेहद्वारि स्थितं द्रुतमपेत्य तमित्युवाच ।
द्राक्पीतशोषरुधिरान्युधि पारसीकान्प्राणान्हरेयुरधुना तु त एव बाणाः ॥

हृीणस्य मे हृदि गतं यदनेन बुद्धं विज्ञापनोक्तिरचनेन विना तदद्य ।
द्वीपं हृतं जितमपि द्विषतामनोकं नेपालभूमिपरिणोरिति निश्चिकाय ॥ ७० ॥

स्नेहः परं मयि विभो तव कल्पनीय-
स्तेनैव सिध्यति समीहितमेतदास्ताम् ।
द्वेष्या न किं तु सुहृदो मम पारसीकाः
संदर्शनस्य भवतो यदमी निमित्तम् ॥ ७१ ॥

एवं वदन्तममुमेप महीमहेन्द्रो
नेपालभूपमबलासहितं निनाय ।
स्वावासगेहसदृशं सहसोपकार्यां
द्रव्याणि च स्वधृतरत्नविभूषणं च ॥ ७२ ॥

नेपालक्षोणिपालं सपदि निजपदभ्रंशितं पारसीकैः
प्रत्यापन्नं वितन्वन्प्रबलभुजमहो नर्तयित्वा समित्याम् ।
भूमीपालश्चिरायागमयत समयं भूभृतो जैत्रयात्रा
सर्वे कुर्वन्ति यस्मिञ्जलनिधिशयनस्वापमुद्रादरिद्रे ॥ ७३ ॥

द्वीपान्सप्त द्विजेभ्यो वितरसि रघुनाथेन्द्र ते सान्द्रतेजः
कुत्राप्यत्राश्रितान्न स्वधनमिति धिया कौतुकाददीरन् ।
अन्यत्रास्माकमस्माद्वसतिमतिसृजेत्यन्तरीपान्तरस्थै-
र्नेपालक्षोणिपालप्रभृतिभिरभितः प्रार्थितद्वीपदान ॥ ७४ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कृतिबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ७५ ॥

काव्यालंकृतिनाटकादिकलनापाण्डित्यमत्यद्भुतं
सर्वज्ञो रघुनाथभूशतमखो यस्योपदिश्य स्वयम् ।
आदातुं गुरुदक्षिणामभिमतामर्होऽप्यहो दत्तवा-
न्कर्णालंकरणं निजं च पतकं पादाङ्गदं कङ्कणम् ॥ ७६ ॥

शास्त्रे श्रौते किं च साहित्यरीत्या साम्यभ्रान्तिं बिभ्रतामुत्तमाङ्गे ।
पादं कुर्वन्भ्राजते कोविदेन्द्रो यज्वा सोऽयं यज्ञनारायणार्यः ॥ ७७ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहिती-
साम्राज्यस्तनयोऽतिविश्रुतनयो गोविन्दयज्वेशितु. ।
षष्ठं सर्गमपूरयत्स विविधैरर्थैर्गरिष्ठं नवै-
रत्नाकद्रुदविद्रदद्भुतकरे साहित्यरत्नाकरे ॥ ७८ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्यासवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
षष्ठः सर्गः ।

---

# सप्तमः सर्गः ।

मुदा युधे चित्तभुवा वियोगिनामुदायुधेन प्रबलानि कानिचित् ।
दिनान्यथापारहिमापनोदनादिनान्यथाभावहराण्युपागमन् ॥ १ ॥

सरोषजायापतिमानवञ्चकैः सरोजिनीनां शिशिरज्वरौषधैः ।
समीरणाङ्कुरसखैर्मनोभुवः समीहितैः कैश्चिदभावि वासरैः ॥ २ ॥

पतत्पुराणच्छदनाः पलाशिनः क्रमोदयिष्यत्किसलाः कथंचन ।
ततैरसेव्यन्त तनूरुहै रविप्रभानभिज्ञप्रमदं मधुव्रतैः ॥ ३ ॥

अनोकहानस्तपुरातनच्छदानपि प्रवालैरभिवृद्धिमेष्यतः ।
पतत्रिणोऽध्यासत भाविवैभवान्सतो विदन्तः सहसा त्यजन्ति किम् ॥४॥

प्रवालचोटीरतनुप्रभोर्धृताः प्रदर्शयन्तः शिशिरेण पालिताम् ।
वनीभुवं वेल्लितभृङ्गतोरणा वसन्तवश्या व्यदधुर्वनप्रियाः ॥ ५ ॥

मरुत्कुमारं मलयावनीभृते निवेद्य जातं नियतं पिका रवैः ।
अतो वनीसंपदमाययुर्न किं प्रभोर्हितं वक्तृषु भाग्यमूर्जितम् ॥ ६ ॥

मरुत्कुमारं मलयावनीभृतः सरोजशय्यामधिशाय्य कोमलाम् ।
मधूपयुक्तं नु मरालयौवतं सपक्षपातं सपदि व्यवर्धयत् ॥ ७ ॥

मरुत्कुमारं मलयावनीभृतः प्रदाय वल्लयो निजपल्लवाङ्गुलीः ।
वनाङ्गणे नर्मवहेऽलिना गणैः सकिङ्किणीकं शनकैरचारयत् ॥ ८ ॥

समीरणा ये स्म भजन्ति शैशिरा दिशामवाचीं मलयस्थितेन ते ।
फणिव्रजेनाहृतशेषिताभिया परापतन्तो मलयानिला बभुः ॥ ९ ॥

स्मरः समारुह्य सदागतिं हयं प्रचारयन्नञ्चितपाटवं वने ।
परागजालैः पदवीं सुधान्धसामरुन्द्ध किं पान्थदृगन्धतावहैः ॥ १० ॥

अधीत्य विद्यां मलयानिला गुरोश्चिरं नृशंसां किमु जीवितेश्वरात् ।
अमुष्य योग्यां गुरुदक्षिणां बलादपाहरन्दातुमयोगिनामसून् ॥ ११ ॥

समेतरेषुः शमनः समीरणं स्वकीयमग्रे प्रविचाल्य दीपकम् ।
अनक्षिलक्ष्याकृतिरापतन्वनेष्वपाहरन्नूनमसूनयोगिनाम् ॥ १२ ॥

पयोजिनी साधु परिष्कृता मधुश्रिया कमित्रा सह मानसौकसा ।
निरस्तनीहारनिचोलमाशया धृतं किमैक्षिष्ट दिनेशदर्पणम् ॥ १३ ॥
इनः स्वबाधां शिशिरे हिमैः कृतां तदा सहित्वा वसुभिस्ततो बली ।
क्रमादिमान्याक्षिपत क्षमावसु प्रतापवान्पातयति द्विषो न किम् ॥ १४ ॥
ममाब्जिनीनां च मयि स्पृहाजुषां हिमानि कृत्वा शिशिरे हितेतरत् ।
गतानि तत्कारणमाक्षिपेयमित्यगादुदीचीं दिशमब्जिनीपतिः ॥ १५ ॥
तनूभवो दण्डधरस्य कुप्यता हरेण सौहार्दमदःसखेन किम् ।
दिवाकरः कारयितुं दिशामगात्कुबेरनाथा कुतुकी शनैः शनैः ॥ १६ ॥
वसुप्रभोः स्वागमनाभिलाषिणः स्ववैभवं दर्शयितुं तदन्तिकम् ।
पतिर्वसूनां प्रययौ मिथो न किं समानयोरेव समागमादरः ॥ १७ ॥
स्वसंनिधेः प्रस्थितमुत्तरां दिशामभीकमर्कं तुहिनान्यपोहितुम् ।
अचोदयद्वीक्षितुमात्मजान्हरित्समीरणान्सादरमेव दक्षिणा ॥ १८ ॥
हिमं निहत्यात्महितं वितन्वतो वने चिरं पश्यतु वैभवं जनः ।
मधोरमुष्येति नभोमणिर्न किं दिनानि गत्या नयति स्म दीर्घताम् ॥ १९ ॥
उदग्रचूतस्तबकोत्थितैः पदे पदे परागैर्नलिनीपतेर्हयाः ।
निमीलितोन्मीलितनेत्रमम्बरे विलम्ब्य यान्तो दिनवृद्धयेऽभवन् ॥ २० ॥
मधुव्रतानां मधुमत्तगीतिभिः श्लथैर्दिवि स्यन्दनसर्परश्मिभिः ।
दृढान्रवेस्तन्वति सारथौ हयान्पुनः पुनः किं नु पुपोष वासरः ॥ २१ ॥
वसन्तकन्तुप्रमुखा वियोगिनां वधे यतन्ते महती निशापि चेत् ।
स्थितिः कथं स्यादिति लोकबान्धवो दिनाभिवृद्धया विदधे कृशां निशाम् ॥
अयं सपत्नीमयते मधुश्रिया परिष्कृतामुत्पलिनीं पतिर्मम ।
सुधामरीचिः सुतमामिति क्रमात्कृशा निशा क्लेशवशादिवाभवत् ॥ २३ ॥
सिताम्बुजेन्दावलिसिंहिकाभुवा समावृते मन्त्रमयोगिशासकम् ।
क्वचित्पिकाः किं नु कुहूरवच्छलान्निषद्य जेपुर्नियता वनान्तरे ॥ २४ ॥
अनेकपे गन्धवहे रतिप्रभोरपास्य भृङ्गावलिशृङ्खलां वने ।
निरङ्कुशं प्रातरति स्म किं पुरो निवारयन्ते पथिकान्पिका रवैः ॥ २५ ॥

मधुद्रवाञ्चत्सुममध्यसंविशन्मधुव्रता मारुतलोलशाखिकाः ।
पलाशिनः सप्रमदाश्रु मौलिभिश्चलैर्मुदेवान्वभवन्पिकारवान् ॥ २६ ॥

अमी सुमेष्वस्मदधिष्ठितान्सदाप्यहो सुगन्धानपहृत्य मारुताः ।
अलक्षिताः क्वाप्यगमन्निति स्म किं भ्रमन्त्यमन्दध्वनि भृङ्गयामिकाः ॥

प्रवालमाध्वीपिकपञ्चमारवप्रसूनसौरभ्यसमीरणार्भकैः ।
विधाय पान्थान्विकलाखिलेन्द्रियान्स्मराय सख्यं स्वमदर्शयन्मधुः ॥ २८ ॥

अहो रतीशो मधुवैरिसंभवोऽप्यवाप मैत्रीमकुतोहतां मधोः ।
अमन्तुपान्थाहितजातिहीनयोस्तयोरनार्यं चरितं हि संमतम् ॥ २९ ॥

परागधूमः प्रसवासवो नवप्रवालतेजः पवमानबालकः ।
अमून्ययुक्तान्यभवन्वियोगिनामहो निमित्तान्यतिबाष्पवृष्टिषु ॥ ३० ॥

मनोभवेनानुवसन्तयाजिना मखे पशून्मारयता वियोगिनः ।
प्रवर्ग्यजन्मेव शिखी प्रवर्धितो बभौ रसालो बहुपल्लवोज्ज्वलः ॥ ३१ ॥

अलिव्रजेनातनुदेवतारथे विकृष्यमाणे विपिनेषु मारुते ।
लताः स्म नृत्यन्ति ललन्नवच्छदप्रक्लृप्तहस्ताभिनयं पदे पदे ॥ ३२ ॥

अहोभिरुद्यानमथावकोकिलैरभूतपूर्वातिशयं सयौवतः ।
रतीशरूपो रघुनाथभूपतिः स नर्म निर्मातुमयं समासदत् ॥ ३३ ॥

मधुद्रवैः सिक्तमहीतलं नवप्रवालकौसुम्भपटीवितानकम् ।
प्रसूनजालैरपि बद्धतोरणं मधुर्यदायान्महिपागमोचितम् ॥ ३४ ॥

मरुत्किशोरैर्विरजीकृता पुनर्महीयमस्मत्सुमधूलिधूसरा ।
इतीव माध्वीमिदमुक्षणक्षमं भयेन यस्मिन्ववृषुः पलाशिनः ॥ ३५ ॥

दशाङ्ककालागरुदारुसंभवो व्यतस्त धूपो मधुना वियोगिनाम् ।
दिवान्धतां किं दिशता यदन्तरे निशो गृहीत्वावयवो विनाशितः ॥

तते समीरैस्तरुसूनसौरभे समस्त यस्मिन्सरणौ विसारिताः ।
अतिम्रदिम्ने परमङ्घ्रिचारिणः प्रभोरभूवन्पटवासपांसवः ॥ ३७ ॥

सुमोद्गमं दौहृदसौष्ठवार्जितं सदैव यस्मिन्समवाप्य जातयः ।
सगर्भ्यसर्वद्रुमसौख्यदायिनो मधोर्व्यधुः किं महनीयजातिताम् ॥ ३८ ॥

द्रुमैः समस्तैरपि दोहदोदयत्सुमैर्युतं यत्समुदायमन्दिरम् ।
अभूद्वतूनामसहासिकागुणप्रयुक्तमंहो जहतां प्रयत्नतः ॥ ३९ ॥
सुमेषुराधत्त सुमेषु शाखिना विशाणि माध्वोर्वियुजां वधोद्यतः ।
प्रमाणमस्मिन्प्रतिशाखिकं शुका विराविणो यत्र विषप्रकाशकाः ॥ ४० ॥
स्मरप्रभोर्यत्र समीक्ष्य पङ्क्तिशः प्रवालपत्रं पटुवर्णशोभितम् ।
सचिह्नमामौक्तिकबलं पृथक्पृथक्स्वनैः पिकाः किं गणका न्यवेदयन् ॥ ४१ ॥
वतंसयन्ते बहुशः स्म पल्लवान्मुदात्तगन्धं मधुपैर्मुहुर्मुहुः ।
व्यधुश्च यस्मिन्सुमनोव्रजं निजं महीरुहस्तन्मधुपानवैभवम् ॥ ४२ ॥
समागताःस्वाहितसौरतेजसो दरेण डिम्भास्तमसा मधुव्रताः ।
प्रदीपबुद्ध्या न पतन्ति चम्पकेष्विति स्फुटं यत्पुरुपैरहासि किम ॥
वितर्क्य पुष्पाणि विलोलशाखिका मिथोविमर्दोन्मिषितैः परीमलः ।
अनीक्षमाणा बहिरन्तरादरादरन्ध्रयन्यद्भ्रमरा न चन्दनान् ॥ ४४ ॥
अमुष्य तत्रापचिकीर्षुभिर्वने सुमानि नेतुः सुदतीभिरादरात् ।
ततोऽखिलानां धरणीरुहां तलान्यनरिततापानि समावरीषत ॥ ४५ ॥
अवेक्ष्य हासांशुलवापहारतः सुमानि हर्तुं सुदृशः समागताः ।
तदुक्तिमाधुर्यहरास्तदा वने पिकाः पलायन्त भिया शुकैः समम् ॥ ४६ ॥
समागमन्संप्रति सादराः स्त्रियः सुमेषु तत्सौरभचोरका वयम् ।
इतीव साशङ्कमिदं समीपतः प्रयातमाशु भ्रमरैर्यथायथम् ॥ ४७ ॥
सितच्छदास्तत्र सितेतरेक्षणा विहारिणीरन्वसरन्विवर्धिताः ।
यियाचिषन्तः स्वमिवाहृतं बलादमूः पुनश्चारु गतागतक्रमम् ॥ ४८ ॥
सुमान्यमूभिः स्ववयस्यमाधवस्फुटानि कौल्यापचितानि चेत्तदा ।
श्रयन्ति साफल्यमिति श्रमापहा वने वधूरन्ववलन्त मारुताः ॥ ४९ ॥
पदे पदे वेष्टितपादपा वने लतास्तदानीं ललनाभिरूहिताः ।
स्वकीयसर्वस्वसुमापहारतो भिया समाश्लिष्टनिजप्रिया इति ॥ ५० ॥
वयं तनूमार्दवहृन्त्यपि स्वयं वचःप्रतिस्पर्धि नतभ्रुवामिदम् ।
मनागनागांसि भवाम सन्त्यजन्त्यथेति पुष्पाण्यमुचन्नधो मधु ॥ ५१ ॥

प्रतिद्रुपङ्क्ति प्रसवान्हृतासवानवेक्ष्य सावेगमवेल्लसौरभान् ।
समत्र तस्मिन्सममेव सादरा गतागतानि प्रमदास्तदा व्यधुः ॥ ५२ ॥
स्वभावतस्ताः स्तनभारमन्थरास्तथाप्यहंपूर्विकया तदा रयात् ।
महीरुहेभ्यो महितानि निष्कुटे सुमान्यपाचिन्वत सुभ्रुवोऽखिलाः ॥ ५३ ॥
सुमानि युष्मत्सुलभेतराण्यधः स्वतन्व्यजामाग्रशयेन नामिताः ।
त्रुटन्ति शाखामृतमुज्झतेति तैर्द्रुमाश्चिरत्नैः किमवाकिरन्वधूः ॥ ५४ ॥
नगाः किमाकृष्टविसृष्टशाखिका नतोन्नतावृत्तिमिषेण योषितः ।
विना घृणा स्वानि सुमानि गृह्णतोविनामभूम्ना विदधुः प्रसादिताः ॥ ५५ ॥
कयाचिदग्रे तिलकः कटाक्षितः समग्रमापादशिखं सकोरकः ।
ततः परासा तनुते स्म वीक्षितं सितेक्षणानां बत सिद्धसाधनम् ॥ ५६ ॥
पुरःसरोभिस्तरुपुष्पकोरका हृता महेलाभिरिति स्वसंनिधौ ।
स्त्रियै परस्यै दययेव सिन्दुको विनिश्वसन्त्यै विततार मञ्जरीम् ॥ ५७ ॥
प्रसूनगुच्छैः प्रथमं गता वधूः प्रसाद्य किं संप्रति मामपेक्षते ।
इति क्रुधेवाङ्घ्रितलाहतं परा समान्यशोकं सुदती समाहरत ॥ ५८ ॥
सुमानि सर्वाण्यपि चूतबालकं हरेयमित्याग्रहशालिनी परा ।
अनारतं तान्यपचिन्वती शयद्वयेन मुग्धा स्वयमभ्यवीवृधत् ॥ ५९ ॥
उदग्रशाखाग्रमगोचरं परामुदस्य बाहामपचेतुमुद्यताम् ।
सखी सहासं मविवेऽनुकुर्वती नमेरुणाहासि न किं नवैः सुमैः ॥ ६० ॥
मितप्रसूनः स ममेति बाहया मृगीदृशाभ्येत्य कयापि वेष्टितः ।
कुरण्टशाखो कुसुमैस्ततोऽधिकैः प्रसादयामास पराश्च तामपि ॥ ६१ ॥
स्वमेक्ष्य गुच्छं सममेककं मिथः कयोश्चिदुक्त्या कलहायमानयोः ।
विवादशान्त्यै विततार मङ्क्षु किं न कर्णिकारः स्तबकान्नवोदितान् ॥ ६२ ॥
सुमानि सान्द्राण्यनुशाखमेकिका स्वगोतितस्ततःसुमबन्धनोदितैः ।
नवैः प्रसूनैर्निपतन्त्ययत्नतो न किं प्रियालादहरन्नतोदरी ॥ ६३ ॥
पराभिरादौ प्रसवेषु केसरान्मधूपजातेषु हृतेषु मानिनी ।
ततो नु तानादरति स्म काप्यहो ततः क्षणान्मद्व्ययमधूदितान्नवान् ॥ ६४ ॥

विलम्ब्य काचिन्मधुविभ्रमैस्तथा सरागमस्थादधिचम्पकान्तिकम् ।
यथा परासां प्रसवा यथेप्सितं ततो भवेयुस्तरसा मृगीदृशाम् ॥ ६५ ॥
परा सयत्नं हरति स्म केतकीप्रसूनगुच्छान्प्रथमं नतोदरी ।
अयत्नमन्यास्त्वलभन्त तानतः स्युरेकयत्नेन शुभंयवोऽखिलाः ॥ ६६ ॥
अनस्तिसाम्यात्मकचोपमावहान्युदीच्यमूलानि तलोदरी परा ।
जहार भूमीजठरेशयान्यपि स्वभूतये हि प्रबलैः सपत्नता ॥ ६७ ॥
प्रविश्य कुञ्जानि परोल्य शाखिनः समुन्नमय्यापि लताः समन्ततः ।
पराणि तस्मिन्प्रमदावने मुदा सुमान्यपाचेपत सुभ्रुवां गणाः ॥ ६८ ॥
अथ प्रसूनान्यपचिन्वतीरमूरवेक्षमाणो मुहुरम्बुजेक्षणाः ।
पराभिरध्यास्त मणीचतुष्किका प्रमोदमानो रघुनाथभूपतिः ॥ ६९ ॥
नतोदरीणां नवपुष्पपल्लवप्रियोपहारेण भृशं समेधितम् ।
प्रदर्शयन्ती प्रमदावनं विभोरवर्णयत्काचिदमुष्य संनिधौ ॥ ७० ॥
जहत्यपुष्पाञ्जघने फलानिव स्फुटप्रसन्नानपि दूरसौरभान् ।
नतभ्रुवोऽस्मानिति नम्रमौल्यो वसन्ति दीनाः कदला वने क्वचित् ॥
द्रुमाः सुगन्धीनि सुमानि योषितां प्रदाय नर्म प्रथयन्त्यमूः पुनः ।
फलानि तासां पदयोरिवानता दिशन्ति रम्भाः श्रमदीनचेतसाम् ॥ ७२ ॥
सुमैः प्रवालैरपि चूतवल्लरी यथा सुमैरेव तथेह चम्पकः ।
नतभ्रुवां दीव्यति नर्मणे कदाप्यनाप्तगन्धौ मधुपैरसौ यतः ॥ ७३ ॥
सुगन्धयोऽपि स्वयमस्तकौसुमश्रियो वयं स्त्रीभिरिहोज्झिता इति ।
• क्वचिद्वसन्ति स्फुटकोटरच्छलाद्वने विदीर्णा व्यथयेव चन्दनाः ॥ ७४ ॥
समूलकाषं कषितादुदीच्यतः समाहृतप्राप्तवसंपदो वयम् ।
परं कृतार्था इति पादपा मुदा हसन्ति शाखाग्रसुमापदेशतः ॥ ७५ ॥
सुमान्यनाविष्कृतसौरभाण्यपि स्फुटेतराणि द्रुहिणस्य तन्वतः ।
अनादृताकौशलमत्र यौवतैः रमामृता शौकरवेण निन्दति ॥ ७६ ॥
• क्रीडासरस्तटमहीकृतकाद्रिवाससुव्यक्तशैत्यमहिताः सुमकेलिभाजाम् ।
श्रान्तिं हरन्ति सुदृशामिह पूगपालीसौरभ्यमन्थरतराः सरलाः समीराः ॥

इति परिसरमिन्दुबन्धुमुख्या परिगतया कथितं भरेण वाचाम्।
सुतनुविरचितं सुमापचायं प्रभुरवकर्ण्य मुदं परामयासीत् ॥ ७८

शुद्धान्तेष्वधिनर्मकाननमथं सूनापचायोत्सवं
कान्ताभिः प्रतिवासरं विरचितं कामं समालोकयन् ।
कन्तोर्मन्त्रिणमन्यवाहयदतुं कौतूहलाधायकं
प्रौढः श्रीरघुनाथभूपतिमणिर्भद्रासनं भासयन् ॥ ७९ ॥

प्रतिशरदजयप्रयाणाङ्कनिःसाणराणार्भटी-
विलसितकृतसंधिविध्वंसविध्यण्डभाण्डोदर ।
सततरचितदानसंतानधाराल्धारानदी-
प्रबलनिखिलसिन्धुबन्धुस्फुटस्फूर्तिकीर्तिक्रम ॥ ८० ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणामनाथ रघुनाथ जनाधिपते ॥ ८१ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहिती-
साम्राज्यो मखिशेखरः कृतिचणः श्रीयज्ञनारायणः ।
सर्गं पूरयति स्म सप्तममयं सद्भिर्गुणैः सत्तमं
तत्राकद्वदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ८२ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसार्वभि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्यासवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणध्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
सप्तमः सर्गः ।

---

# अष्टमः सर्गः ।

दीप्रभानुसुषमासुषमाब्जैर्दीनकान्तुरथकैरथ कैश्चित् ।
वासरै रजनिगौरवचोरैर्धूसरैरजनि चक्रसमीरैः ॥ १ ॥

रूढगातिकलिकावलिकान्तैरूढजालपदलोल्पयोजैः ।
जृम्भितार्यममहोभिरहोभिः स्तम्भितातनुयशोभिरशोभि ॥ २ ॥

भास्करस्य चिरमातपभूम्ना बाधिता शिशिरता सरसीषु ।
आसदत्पदमदःप्रमदाना स्नावनाय किमु वारिजिनीनाम् ॥ ३ ॥

हेलिना सरसि हेतिनिपातैरम्बुजानि दलितान्यवलोक्य ।
आश्रिरन्ति वनिताक्षिविलासं कर्दमे झषगणो नु निलिल्ये ॥ ४ ॥

शीतमात्मनि चिरेण विधेयं हारपङ्क्तिरहितादहिमांशोः ।
आतपादवितुमत्र सहायानाश्रयत्किमु कुचानबलानाम् ॥ ५ ॥

उत्तरीयवसनान्युदवाक्षुर्योषितः कुचयुगेषु मृदूनि ।
आश्रितानि तुहिनान्यहिमांशोः शीततामिव चिरेण दरेण ॥ ६ ॥

अर्यमापि निजमातपतापं हन्त सोढुमपटुः सरसीषु ।
अब्जगर्भनिहिताङ्घ्रि कथंचिद्दीर्घदीर्घमनयद्दिवसानि ॥ ७ ॥

आतपस्तनुमतामहिमांशोः स्वैरचङ्क्रममहो न दिवेति ।
विस्मयाय न विहारमवन्यामातनोद्यदतनोरपि भग्नम् ॥ ८ ॥

अक्षि मध्यममपि व्यतनोन्मामकुलीनमधुना पुरजेतुः ।
दक्षिणं तदहिमक्षमितीव त्रस्नुरन्तरदधादसमेषुः ॥ ९ ॥

सर्वतोमुखसरन्मृगतृष्णावीचिकाकृतविडम्बनखिन्नाः ।
संकुचत्सलिलगात्रमकुर्वन्नापगा गतिमदत्रपयेव ॥ १० ॥

ग्रैष्म आत्मरिपुमादधतीनां स्वास्पदेषु रविरम्बुजिनीनाम् ।
जीवनानि कमिताप्यपजह्रे स्थान एव हि तदेतदिनस्य ॥ ११ ॥
आत्मजीवनहृतोऽप्यहिमांशोरन्तराश्रितमवाप्य सरांसि ।
ग्रैष्ममप्रतिहतं समरक्षन्कीर्तिरेषु किमदृश्यत तेन ॥ १२ ॥
अर्यमा भुवि जलान्यपहृत्य क्वाथितानि सरसां करजालैः ।
हन्त घर्मसलिलान्यपदिश्य व्याकिरत्पथि वपुःषु जनानाम् ॥ १३ ॥
कर्णशेखरशिरीषमधूलीरक्षिता मधुलिहो रमणीनाम् ।
गल्लके लुसितघर्ममपोहन्पक्षजातपवनेन कृतज्ञाः ॥ १४ ॥
जाग्रति स्फुटजपास्तबकानां कैतवेन खरहेतिमयूखाः ।
मार्गितुं वनमहीज्वलति गर्ते तत्समास्त नु लुलायतमिस्रम् ॥ १५ ॥
अक्षिणि कालभिषगानपरीक्षात्पाटले सति परं वनलक्ष्म्याः ।
दम्भराञ्जनमलिम्पत माध्वीबाष्पवृष्टिरुदिता बहुधा यत् ॥ १६ ॥
जीवितेश्वरगुरुः प्रमुरीत्या जीवनानि जगतां हरतीति ।
अस्फुटत्क्षितिरलक्ष्यत न द्यौरात्मभूः क्वचिदगादनिलोऽपि ॥ १७ ॥
वासराधिपतिना वसुपैस्तान्वतानि भरिताः सकलाशाः ।
दारितं वसुमतीस्थलमौष्ण्यादीदृशं हि भुवि शीलमिनस्य ॥ १८ ॥
आतपं प्रबलमंशुमतो भूः सोढुमक्षमतया स्वभवानि ।
चक्रमारुततरयेण रजांसि च्छादकानि किमुदक्षिपदस्य ॥ १९ ॥
स्वातपैर्दिनकरः सरसीनां शोषकस्तपति मामपि रूक्षः ।
इयमूर्मिहरिव स्म रजोभिः शोपयत्यनिलचोदनकीर्णैः ॥ २० ॥
चक्रमारुतबलेन चलस्य च्छायया तरुगणस्य चकाशे ।
तापिते महितले तपनेन स्थातुमक्षमतयेव लुठन्त्या ॥ २१ ॥
काननेषु विहरन्कपिकच्छूगुच्छकव्यतिकरेण कुतश्चित् ।
मारुतः समधिकामिव कण्डूं मार्गे पथि लुठन्परिजह्रे ॥ २२ ॥
आशु गोपयति सादिनि कान्तावत्यवस्थितगतिः किमु वाहः ।
मार्गवं द्रुतमहिण्डत देशे मण्डलं प्रतिपदोदितरेणुः ॥ २३ ॥

उद्भवद्दवहुताशनधूमैरादधत्सु तिमिराङ्कुरशङ्काम् ।
अश्रुवान इव गाढममर्षान्निजनीपतिरलक्ष्यत रूक्षः ॥ २४ ॥

आरदुच्चतरुमूलमविक्षत्कुञ्जमध्यमुरुमध्यशयिष्ठ ।
पल्लवानिति तदा घनदाहं भास्वदाहितमुदास्यत दावः ॥ २५ ॥

अंशुमाननुनिशं वसुदानैरात्मनोऽप्यविषयं बत शीतम् ।
आरुरुक्षुनमदीदहदुर्व्यामग्निना वसुमतां किमसाध्यम् ॥ २६ ॥

लोकबन्धुरपि लोकमशेषं तापितं निजकरैर्दवभम्ना ।
अप्यदाहयदशीतमरीचिः किं कृतान्तगुरुताकृतमेतत् ॥ २७ ॥

शीतमन्धतमसैश्चिरमन्तः स्थाणु दावदहनेन निरस्य ।
द्योमणेः कथयितुं द्युरिदं किं विस्फुलिङ्गवपुषा विजगाहे ॥ २८ ॥

उत्थितं प्रभुरुदस्य वसन्तः किं बलेन शिशिरं कृतकृत्यः ।
दावमात्मशिबिरं दवकीलैर्दीपयन्स्मरसखस्त्यजति स्म ॥ २९ ॥

दावमात्मविततांकुरवृद्धिं मारुतो बत मधौ विदधौ यः ।
दावपावकसखः स्म स घर्मे दृश्यते चपलताफलमेतत् ॥ ३० ॥

आपि नीडमनलैरिति झिल्लीक्रोशनेन मरुदेत्य कुतोऽपि ।
उद्भ्रमंस्तृणमुदक्षिपदस्मादैक्यहेतुरनयोः खगता यत् ॥ ३१ ॥

वीक्षणैरतनुविक्रमसत्तासाधकैरतिशयेन युवानः ।
पर्यरप्सत परस्परदेहस्पर्शरोधिदिनवञ्चनयेव ॥ ३२ ॥

सर्वतोनिपतदम्भसि धारामन्दिरे कुचगिरौ महिलानाम् ।
अञ्जतेव धनिनारयत घर्मस्तालवृन्तमरुता तरलेन ॥ ३३ ॥

तापनं बत वर्तसिततारराजानयो रजनयो जनतापम् ।
काश्चिदुन्मिषितकामसमज्ञास्फूर्तयः समहरन्सुकृतिभ्यः ॥ ३४ ॥

वासरैरुपवनीमथ रम्यामेभिरन्वगतियन्त्रगृहाढ्याम् ।
स स्म याति रघुनाथनृपालः सस्मयाभिरधिकेलि वधूभिः ॥ ३५ ॥

अक्षतं शिशिरतां रिपुमेषा रक्षतीति रविणेव नियुक्तम् ।
पाटलीकपटमंशुमलीनां पेटकेन तमसा रुरुधे या ॥ ३६ ॥

पुष्पिणीषु मधुपैर्गणिकासु स्पष्टमेव सरसं रममाणैः ।
आवृतेति नु पलायत यस्याः सत्त्वपस्थितिसहो बहिरूष्मा ॥ ३७ ॥

तिर्यगूर्ध्वततशीर्णहिमाम्भःस्फीतयन्त्वनलिकावलिकान्ते ।
ऐन्द्रवाश्मखचितेऽध्वनि शैत्याद्वैतमप्रतिहतं हि यदीये ॥ ३८ ॥

यत्र नैकजलयन्त्रचतुष्कस्पर्शशीतपवनाङ्कुरभाजि ।
स्पष्टमेव ऋतुरप्रतरार्को भाव्यते स्म फलिनैः सहकारैः ॥ ३९ ॥

तापनांशुपरितप्तरसानां खादनेन सहकारफलानाम् ।
वीतकाकु विशदीकृततारं कूजता शुककुलेन युता या ॥ ४० ॥

तादृशीमुपवनीमवनीन्द्रो वारिशीकरवहां जलयन्त्रैः ।
मानिनीभिरभिनन्द्य स कंचिन्माननीयमभजन्मणिसौधम् ॥ ४१ ॥

मन्दिराण्यभिमुखं गणिजालैर्निर्मितानि मणिनिर्मलभित्तौ ।
बिम्बितान्यपि विवेक्तुममुष्मिन्स्पर्शनं मतिमतां प्रबभूव ॥ ४२ ॥

बिम्बितानि मणिभित्तिविभागा मन्दिरस्य निजमध्यजुषोऽस्मिन् ।
नावहन्नगति नास्त्युगमस्य प्रत्यसृक्षत पराणि तथैव ॥ ४३ ॥

अत्र वज्रमणिभित्तिविभागद्वित्वजालविवराक्रमदभ्गान ।
स्वेच्छया क्वचिदसत्यपि रोधे गच्छति स्म नियतं लघुधूपः ॥ ४४ ॥

भित्तिकल्पितविदूरनवाश्मस्फीतसूत्रवशवर्तिभिरग्रे ।
हंसिकासु बिसखण्डविमोहैर्हासिता युगपदत्र शुकौघाः ॥ ४५ ॥

हंसदत्तबिससूत्रमगृह्णन्भित्तिकासु वलभेदनमण्यः ।
वाल्यवायजनिलावलमानस्वच्छसूत्रवहनस्पृहयेव ॥ ४६ ॥

द्वेपिभिर्विनयतः स्थितघासग्राहितात्र हरिनीलगृहाणाम् ।
चक्षते न समरेऽस्मदधीना सेयमास सुलभेति विद्भिः ॥ ४७ ॥

स्वोचिताखिलगुणस्थितिहृद्याप्यत्र नीलमणिवेदिरहासीत् ।
घाससक्तिमखिलेषु समीके खादितेषु भुवि तेषु सपत्नैः ॥ ४८ ॥

स्त्रैणमूरुसदृशो नवरम्भाः स्तम्भपङ्क्तिषु सरोषमबध्नात् ।
इत्यदोमुखसमैर्मणिपद्मैरत्यहासि वलभीषु किमत्र ॥ ४९ ॥

कायमानकतया कलितानां नात्र किं समुचिते नददानाम् ।
घर्मशासरघनार्यमतापच्छेदनादभयसेव्यसमाख्ये ॥ ५० ॥
तत्र सद्मनि ततो नु धरित्रीवृत्रशासनगिरा विपुलाक्ष्यः ।
वारिखेलनवशंवदचित्ताः संघशस्तदुचितं समनह्यन् ॥ ५१ ॥
दीर्घवेणिरुचिराभिरुरोजद्वन्द्वबन्धदृढताप्रसिताभिः ।
शृङ्गवारिहनिधावनसह्यं स्त्रीभिराभृपत काश्चन भूपाः ॥ ५२ ॥
काश्चिदासु नवघौसृणवस्त्रव्याजतो मृगदृशो वसते स्म ।
प्रेयसि प्रणयपेशलभावादन्वहं नवनवाननुरागान् ॥ ५३ ॥
बालिकाः पुनरिदं प्रथमाम्भःकेलिकास्तदनु केवलमध्याः ।
हारहंसकमुखाभरणाढ्या नेह किंचिदपिनेहुरुरोजान् ॥ ५४ ॥
अम्बुखेलनकृते हरिणाक्ष्यः स्वैरमत्र न परं समनह्यन् ।
तर्जितः स्तनरुचा धरणीन्दोः स्थातुमस्य सविधे मदनोऽपि ॥ ५५ ॥
सद्मनः स रघुनाथनरेन्द्रः सज्जितः सलिलनर्म विधातुम् ।
कामिनीभिरुपकण्ठमथार्यं गाहते स्म सरसः कमनीयम् ॥ ५६ ॥
अम्बुजानि वदनैरभिभूय स्वैस्ततः सरसि तत्प्रतिबिम्बान् ।
बिम्बितैरपि वितेनुरपास्तान्योपितो भवति युक्ततरं तत् ॥ ५७ ॥
अब्जमीनकुवलान्यधिपाथोदुर्गमत्रनयनैस्तुलितानि ।
सुग्रहाणि सुचिरादिति तीरे संमदेन सुदृशः स्म मिलन्ति ॥ ५८ ॥
नावसन्निह नरेन्द्रवधूनां पक्षिणो धुरि पराक्रमचोराः ।
दस्यवो हि भुवि बिभ्यति वित्तस्वामिनोऽप्यविदतः स्वयमेव ॥ ५९ ॥
पङ्कजानि सुदृशां प्रतिबिम्बच्छद्मनात्र मुखवाग्गिचौर्यात् ।
गञ्जितानि सलिले महतीति व्यद्रवन्गतिमुषो विहगाश्च ॥ ६० ॥
स्त्रैणगानशतविद्रुतरोधःपद्मरागमणिभागपयोभिः ।
अम्बु घौसृणमगाहत वेगात्पाटलत्वमतिपाटलमत्र ॥ ६१ ॥
हेमयन्त्रपतितैर्हिमतोयैरुद्भ्रमन्ति जलजान्युपरिष्टात् ।
शात्रवं स्म सहजं किमिहैषां व्यञ्जयन्ति भयवेपथुमन्ति ॥ ६२ ॥

गन्धसाररसकर्दमजत्वात्प्राकृतेभ्य इह पङ्करुहाणि ।
सौरभेऽतिशयितानि भुवीति स्वारवैरुदचरन्निव भृङ्गाः ॥ ६३ ॥

वस्तुभिर्भृतमदः प्लवमोचापद्मषट्पदझषप्रसवाद्यैः ।
वेधसेव निचितैर्विपुलाश्रीसृष्टिकारणगणैश्चिरलब्धैः ॥ ६४ ॥

स्वश्रमापहमुपेत्य सरस्या मारुतार्भकमितो मदिराक्ष्यः ॥
केशसौरभभरेण कृतज्ञाः पुष्टमातनिषत स्फुटमाशु ॥ ६५ ॥

क्वापि तत्तटपथे कुटिलाक्ष्यः काश्चिदाशु पृथुकाञ्चनकुम्भान् ।
पूरयन्त्यथ पुरा मृगनाभीभावितैर्घुसृणपङ्कपयोभिः ॥ ६६ ॥

हेमयन्त्रनलकैर्मणिशृङ्गैरप्यातुषसमुद्गपुटैश्च ।
कर्तुमारभत घौसृणवारिक्षेपणं युवतिषु क्षितिपालः ॥ ६७ ॥

एतासु कञ्चुकमुपाहतमेकिकायाः शृङ्गात्तघौसृणरसैर्नृपशोतमासा ।
स्वापह्नुतं कुचयुगं समदर्शयद्द्राक्प्रायो न किं तदतिफल्गुगुणेषु युक्तम् ॥

वक्षोजयोरभिहतस्य वनेरुहाक्ष्याः
कस्याश्चिदीशकरशृङ्गगतोदकस्य ।
संताडयन्ति पृषता स्म सरस्तटस्था-
न्कोकान्फलं न किमिदं कुचतुल्यतायाः ॥ ६९ ॥

माणिक्यशृङ्गपयसा महिपेरितेन वक्षोरुहौ निरवगोपितपत्रलेखौ ।
कस्याश्चन व्यरुचतामधिकं ततोऽपि कान्तामणेः प्रकटयौवनगौरबिन्दू ॥

भूपोदजातुपपुटाभिहतं परस्याः कर्णोत्पलं न्यपतदम्भसि कम्बुकण्ठ्याः ।
नार्यो मिलन्ति नयनैः कुलमस्मदीयं भङ्क्तुं क्रुधेति यदितुं भृशमुत्पलेभ्यः ॥

भूपेरितं कनकशृङ्गभृतं परस्याः संताड्य वारि कुचयोस्तदनोचितौ द्राक् ।
प्राक्षालयत्किमिदं शुभगस्य शश्वत्प्रच्छादकेन सह पत्त्रविलेखनेन ॥ ७२ ॥

अन्या भिया परिजिहीर्षुरभीकशृङ्गवारिप्रहारमबला वलितानना द्राक् ।
पद्मावृतं न परमाननमपि स्म पुष्पैः संताडयत्यनुपदं स्वकचान्तवान्तैः ॥७३॥

छिन्नः परं चरणयोः सुचिरं विमृद्र-
न्हारो निरुध्य गतिमब्जमुखीं प्रयान्तीम्।
यन्त्रोदकाहतिशतं यदनेष्ट नेतु-
र्युक्तं हि तद्गुणगणाद्युगपच्च्युतस्य ॥ ७४ ॥

स्रस्तं जवेन चरणौ पथि नह्यमानं
कांचिन्निरुध्य बत काञ्चनकाञ्चिदाम।
धात्रोपतिं स्वरसितैरनुधावमानं
शृङ्गोदकाहतिहृते स्म चिरं नियुङ्क्ते ॥ ७५ ॥

नाथेन शृङ्गपयसा न किमाहतान्या
वक्षोजयोः स्फुटनवस्वनखव्रणाङ्कम्।
शृङ्गारभीतिमिलितां श्रयति स्म लज्जां
तामीर्ष्यया तु सह काञ्चन तत्सपत्न्यः ॥ ७६ ॥

एका समेत्य सविधं करयन्त्रवारिसेकासहेव नृपतिं लघु पर्यरब्ध।
सेऽपि क्षणेन सुतनुं स्वयमङ्गसङ्गात्स्नातामिव व्यधित सान्द्रसुधाझरीभिः॥

दक्षोऽपरां नृपवरो दयितां सवेगं गृह्णन्निव प्रचलितां स कृशोदरीषु।
आलिङ्ग्य रोषरहितास्वपि जाग्रतीषु सर्वास्वमन्यत कृतं स्वयमेव साधु॥

सिक्तेऽखिलाभिरसिताम्बुजलोचनाभिः
सिञ्चन्निमाश्च मणिशृङ्गभृतैः पयोभिः।
यूथाधिपो बहुकरेणुयुतो यथायं
हर्षात्सरोवरमवातरदुर्वरेशः ॥ ७९ ॥

नाभीबिलैरपहृतोऽपि नतोदरीणा-
मम्भोभरः सरसि नापचितो न चोच्चैः।
मग्नैः कुचैरजनि हन्त महद्भिरासां
त्रस्तो नु भूरमणदारविहारयोग्यम् ॥ ८० ॥

मग्नैः कुचैर्गुरुभिरस्य मनस्विनीनामम्भोभरेण नृपतेरभिवर्धितेन।
स्वान्यम्बुजानि चकितं नु सरो मुखांशुचौर्यादगूहत निमज्जनकैतवेन॥

द्रोणीविचित्रपटमण्डपधोरणीका भर्मद्रवोल्लिखितलोहपरीतपार्श्वा ।
नीरन्ध्रसंधिफलका निपुणाभिरेका हर्षोत्सरो विधुमुखीभिरनायि तूर्णम् ॥

पाण्डित्यनिर्जितफणिप्रभुचोदनेन शाखापुरीं भुवि यथा सरसा स्वपुर्याः ।
अभ्युद्गतामिव समं हरिणेक्षणाभिर्द्रोणीमिमां क्षितितुषारकरोऽध्यरुक्षत् ॥

कर्णैररित्रसहितैः कमलेक्षणाभिः काभिश्चन क्षितिशतक्रतुचोदनेन ।
चातुर्यतः सरसि सेयमचाल्यतास्मिन्द्रोणी सलीलमनतिद्रुतमन्दचारम् ॥

क्रीडातरीं सरसि तत्र कृशोदरीभिर्निर्वर्ण्य वर्णयितुमम्भसि नीयमानाम् ।
स्रोतोभिराननभवैः ससुधारसानामारब्ध सादरमसाविति सार्वभौमः ॥ ८५ ॥

आगच्छतीव सरसस्तदमुष्य पारमक्ष्णोरवारमचिरादपसर्पतीव ।
अस्मान्विहारवनमप्यनुधावतीव द्रोणी गतिव्यवसितं सुदृशस्तदेतत् ॥ ८६ ॥

धावन्त्यपि श्रयति नर्म तरी यदेषा
निष्कम्पतां गतिजवं निगदाम्यमुष्याः ।
अप्यल्पतामिव गतैरधिपारमारा-
दक्ष्णोः सवेगमगमैरधिकायमानैः ॥ ८७ ॥

बाहायुगेन सरसि प्लवतेऽवलम्ब्य काचिद्विलोकयत काञ्चनकुम्भमेषा ।
कोपान्निमज्जयिषतीव कुशेशयाक्षी वक्षोजगौरवमुषं बत वारिगर्भे ॥ ८८ ॥

अन्या निजोरुयुगलेन तदंशुसाम्यगर्वावहं कदलकाण्डमहो विमृद्य ।
अम्भोविहारमधिकेलिसरः सृजन्ती हस्तोपमास्पदरुषा हरते सरोजम् ॥

बाहुद्वयप्लवनवेगभवापरस्या
वीचीमुखं निजविरोधि निरस्यतीति ।
आवृत्तवृन्तदलिताब्जनिभेन काचि-
दम्भोजिनी हसति भीवलितास्यमस्मिन् ॥ ९० ॥

आलम्ब्य हेलकमिहाधितडागमेकं कासांचन प्लुतिजुषां कलभाषिणीनाम् ।
भान्त्याननानि बहिरुल्लसितानि तानि पाथोजकाननमिव प्रचलत्स्वभावम् ॥

अम्भोजकैरवमपास्य बहिर्जलान्त-
मङ्क्त्वा झषानपि बलादवमत्य दृग्भ्याम् ।
उज्जृम्भते क्वचन काप्युपजायते य-
द्भङ्गैः स्थितिः प्रतिकलं भरितोभयेषाम् ॥ ९२ ॥

वक्त्रेक्षणद्युतिहराण्यपि पङ्कजानि वध्वो वहन्त्यधिशिरो नयनांशुचोरान् ।
अस्मान्परं त्रिकलयन्त्यधुनेति मीनाः प्रष्टुं तदुद्भवमिव प्रविशन्ति पङ्कम् ॥

काचिद्भयादधिसरो गलदम्ब्रमम्भो बाला विहाय समशः प्लवने न शक्ता ।
पद्मानि याचति परां चिरमुत्तरन्तौ तस्या विलोकयत दैन्यमभूतपूर्वम् ॥

पद्माकरो मृगदृशां स परम्परासु पद्मादिमं स्वमखिलं प्रतिपाद्य सद्यः ।
अत्यन्तमुल्लसति हन्त महाशयस्य सर्वस्वदानमपि सांप्रतमेव भूम्नोः ॥९५॥

सरसि विहरणं सरोरुहाक्षीर्विभुरवलोक्य वितन्वतीरतीव ।
व्यहरत रसिकः स्वयं तदानीमयमपि तत्र मुदावतीर्य तर्याः ॥ ९६ ॥

विहृत्य सरसि क्ष्माविभुरयं निजैर्योवतै-
रवस्त कनकद्रवैरतिविचित्रिते वाससी ।
अभूषयत भूषणैरथ मणीमयैः प्राविश-
त्स सौधमधिकोन्नतं श्रयति च स्म भोगान्बहून् ॥ ९७ ॥

कदापि जलकेलिभिः शिशिरतोयधारागृहैः
कदाचन वधूकुचैरधिकशीतलैरेकदा ।
विशुद्धतरमौक्तिकग्रथितदामभिश्चान्यदा
विभुः स समयं क्षितेरनयदर्यमोत्तेजकम् ॥ ९८ ॥

राघवनवनघनादर माघवनवनक्ष्मारुहोदार ।
खण्डितवसुधाकण्टक पण्डित वसुधारयाभिषिक्त कवे ॥ ९९ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ १०० ॥

श्रीगोविन्दमखीन्दुवंशमणिना श्रीयज्ञनारायणा-
भिख्येनाध्वरिणा कृते मधुसुधारोधाय मेधाविना ।
शान्तानिष्टमदोऽजनिष्ट मधुरः सर्गोऽष्टमश्चोज्ज्वल-
स्तत्राकद्रुदविद्रुदद्भुतकरे साहित्यरत्नाकरे ॥ १०१ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
अष्टमः सर्गः ।

# नवमः सर्गः ।

अथ कैरवभैरवो नभःपथकैरम्बुमुचां कदम्बकैः ।
रुरुचे समयः स्मराद्दतो रुरुचेतोहरशाद्वलस्थलः ॥ १ ॥

अवनीपरितापहारिभिर्नवनीपस्तबकोपहारिभिः ।
यवसैकसुहृद्वनीतलैर्दिवसैः किंचिदभावि शीतलैः ॥ २ ॥

अहरं जगतामहं रवेः सचिवः प्रावसलिलानि पश्चिमः ।
इति तान्यमुनैव मारुतः पुनरुत्सर्जयितुं पुरो ववौ ॥ ३ ॥

जलदैर्मम मार्गरोधकैर्जगदेतत्सकलं निरोत्स्यते ।
इति भीरुरिवाहिमद्युतिस्तनयं दण्डधरं समासदत् ॥ ४ ॥

जलशोषणचातुरीं निजां विभुरह्नां किमु विस्मृतां चिरात ।
तदिनोशपिबात्तपोधनादधिकर्तुं दिशमाप दक्षिणाम ॥ ५ ॥

दिशमब्धिपिबेन मौनिना दिनभर्ताधिगतः परिष्कृताम् ।
स्पृशतीति तमङ्घ्रिसंततिं स्तनयित्नौ समकोचयद्भिया ॥ ६ ॥

अवलम्ब्य दिनान्यशोषयद्रविरम्भांसि पुरेति रात्रिषु ।
अकरोदभिवृद्धिमादरादद्सीयां ध्रुवमम्बुदागमः ॥ ७ ॥

शिथिलेऽप्यचिरांशुभिः कथं फणभृत्प्रग्रहबन्धने रथम् ।
तरसा प्रविचाल्य सारथिस्तरणेर्ह्रासयति स्म वासरान् ॥ ८ ॥

सलिलानि मदर्पितान्ययं सकलान्यप्यपहृत्य दक्षिणाम् ।
अयते दिशमर्यमेत्यगादमुमाक्रष्टुमिवाम्बुदव्रजः ॥ ९ ॥

स्थगितास्थगितौ सरोजिनीविभुचन्द्रौ जलदैर्विरेजतुः ।
स्वपनोन्मुखतां सरस्वति श्रयतः शार्ङ्गभृतो दृशाविव ॥ १० ॥

प्रथमं दिवि पञ्चषैर्घनैस्तपनश्छन्नतनुर्मुहुर्मुहुः ।
समशीलयदम्बुदागमात्स्वतिरोधानकलामिव त्रसन् ॥ ११ ॥

पृषतैर्भुवि पञ्चषैर्यथा प्रियमातन्वत चातकावलेः ।
न तथा जलदाः स्वधारया ननु सर्वोऽवतिरप्रियंकरः ॥ १२ ॥

सलिलद्रुहमाश्रयत्ययं स्वयमब्जोऽपि रविं कदाचन ।
इति रोषवशादिवोडुभिः स्तनयित्नुः शशिनं समावृणोत् ॥ १३ ॥
भुवमातपभूमतापितां शिशिरामम्बुभृतश्चिरं तथा ।
व्यधुरन्वहवृद्धिशालिभिः सलिलै रक्षति सा यथा सहेत् ॥ १४ ॥
अवधीरितमौष्ण्यमावहन्त्यधुना स्त्रैणकुचा इति क्रुधा ।
जलदाः स्म तदाश्रयान्गृहान्स्थगयन्ते लघुधूपकैतवात् ॥ १५ ॥
अधिघर्मदिनान्तमादिमे शयिते विष्टपसद्मनि प्रभौ।
परितोऽप्यचरन्पयोमुचो निजगर्जानिभघण्टिकारवाः ॥ १६ ॥
चलचन्द्रकनीलकण्ठविष्फुरितं नाट्यविधौ भुवस्तले ।
अवलोक्य बकास्थिमालिका दिवि बभ्राम रुषेव कालिका ॥ १७ ॥
जलदा भुवि चातकद्विजव्रजसंजीवनवैभवोचितम् ।
अवहन्त दिगन्तविस्तृतं बहुशः किं बककैतवं यशः ॥ १८ ॥
सुरनायकचालिते मुहुः स्फुटधारं दिवि वाहने वहन् ।
बकसंततयः प्रकीर्णकव्रजलक्ष्मीमभितश्चलाचलाः ॥ १९ ॥
शशितिग्मरुचौ महौधिकौ समये स्वस्ववशे दिवानिशम् ।
सहसा वृणुतः समुत्थिताविति तावावृत वारिदागमः ॥ २० ॥
अविभक्तमहर्निशं व्यधुर्विधुतादित्यविधुप्रभा घनाः ।
अवनीतलमब्जकैरवैर्विरहय्यापि विभागसूचकैः ॥ २१ ॥
अवधूय रविं तदाश्रयं हरितोऽहान्यपि पद्मिनीर्घनैः ।
अरुधत्समकोचयत्स्वयं पयसामज्जयदम्बुदागमः ॥ २२ ॥
सलिलानि रुषा सरोजिनीरधिगर्भं सरसाममज्जयन् ।
सवितुर्न कदापि शोषकात्स्वपतेः पूर्वममोचयन्निति ॥ २३ ॥
सकलाम्बुजजातिनास्तिके समये मेघनिरुद्धरोदसि ।
सविता बत पाणिनीरजं समरक्षद्बहुयत्नमेककम् ॥ २४ ॥
अरुचन्दिवि विद्युतो घनैररुणस्येव रुचो हठाद्धृताः ।
निभृतेतरतापदेशतो निजनिर्मोचनकर्मलालसाः ॥ २५ ॥

जलदै रविचन्द्ररोधकैः क्षणदोत्तैरपि मे क्षतिर्भवेत् ।
इति भीतिवशादिवाभवच्चपलानां दिवि चञ्चलं कुलम् ॥ २६ ॥
द्युतयः किमु विद्युतस्त्विषामधिनेतुर्द्रुतमम्बुदैर्वृताः ।
अभितोऽपि चिराय लाघवादधृता बभ्रमुरभ्रसीमनि ॥ २७ ॥
स्वविभावितकेतकीसुमस्तबकामोदहरा वनेष्विति ।
भुवि न स्म सहन्ति विद्युतो भुजगानां क्वचिदप्यवस्थितिम् ॥ २८ ॥
परितापहृतां पयोमुचां प्रवितीर्णा जनि रत्नगर्भया ।
निजकर्णभवन्मणीघनुर्निभतः किं नवरत्नमालिका ॥ २९ ॥
वरटासदसां वलाहकस्तनितेन द्रवतां ससाध्वसम् ।
अपतन्करकापदेशतो भृशमण्डान्यभितो भुवस्तले ॥ ३० ॥
जलदैर्दिवि चन्द्रिकातपौ निबिडौ किं स्थगनैर्निपेततुः ।
स्वघर्षणचूर्णितौ क्षितौ करकावासवकोपकैतवात् ॥ ३१ ॥
समयेन सघर्घरारवं घननीलाश्मघरट्टचूर्णितौ ।
पततः स्म भुवीन्दुभास्करौ करकावासवकोपकैतवात् ॥ ३२ ॥
समयो नटनानि विद्युतां समवेक्ष्याभ्रपथे मणीगणैः ।
मुदितोऽभ्यपिचन्मुहुः क्षितावपतंस्ते हरिकोपरूपतः ॥ ३३ ॥
करकाघुटिकाहतैः शतक्रतुकोदण्डधरो घनागमः ।
निजशात्रवनीरजाश्रयं नियतं हंसकुलं निरास्यत ॥ ३४ ॥
अभितापितमंशुमत्करैरधिघर्मं जगदण्डमम्बुदः ।
सलिलैरसिचत्ततोऽभवत्स्तनितं तत्स्फुटनोद्भवो रवः ॥ ३५ ॥
जलदस्य बभूव गर्जितैर्जगदण्डं श्लथसंधिबन्धनम् ।
अतिवर्षमिषात्तदस्रसन्नवनावावरणाम्भसां भराः ॥ ३६ ॥
निबिडो न परं बहिर्गतं निखिलं व्योम रुरोध नीरदः ।
जनताः श्रुतिगर्भभागपि स्थलधाराहतजातनिस्वनैः ॥ ३७ ॥
तपनोपचितं स्वतापमप्यभिवर्षञ्जलदोऽयमाक्षिपत् ।
इति बाष्पमिलामुचन्न किं सदयाः शत्रुजनेऽपि साधवः ॥ ३८ ॥

अविशत्क्षितिगर्भमब्जिनोपतितापो बहिरक्षमो वसन् ।
इति हन्त रुषेव वारिदाः पविहस्तं पुरुषैरदारयन् ॥ ३९ ॥

निरुपाधि सजीवनं जगन्निखिलं कल्पयतः पयोमुचः ।
असहद्भिदुराहतानि तत्परुषोक्तीरिव पत्युरेकदा ॥ ४० ॥

स्वरसातिशयेन संकुचत्समनिम्नोन्नतबोधमध्वनि ।
धुतकङ्कणमस्तहंसकं द्रुतमम्भोनिधिमापुरापगाः ॥ ४१ ॥

मिहिरेन्दुशिला मिथः सदा विदधत्योऽपि विरुद्धकार्यताम् ।
निजनाथमहो निरोधकं समये ताममुचन्समं शुचा ॥ ४२ ॥

स्ववितीर्णमिताम्बुवर्षिणो मुदिरादम्बुधिराप मुक्तिकाः ।
अपवर्जितमल्पमप्यहो प्रकटं सत्सुफलाय कल्पते ॥ ४३ ॥

अलयः कुटजासवं वनेऽत्र पिबन्नभ्रमदभ्रमम्बरे ।
अवनौ समताडि धारया बत सद्यः पथिकैरखिद्यत ॥ ४४ ॥

रथमन्विसुहृच्छरासनैरहितः पञ्चभिरप्यहो शरैः ।
अखिलं जगदोशिता रतेरजयत्केवलमात्मगौरवात् ॥ ४५ ॥

सनवाम्बुजकैरवश्रियो घनवाचंयमतोपदेशकाः ।
अभवन्परिमृष्टपद्मिनीविभवस्वच्छदिशोऽथ वासराः ॥ ४६ ॥

अनवस्करभास्करप्रभैरनवस्कन्दनहंसविभ्रमैः ।
समशो भिदुराभयंकरैः समशोभि द्विरदेहितैर्दिनैः ॥ ४७ ॥

घनबन्धनमोचितौ दिवाकरचन्द्रौ शरदा कथंचन ।
विषमां नियतौ विना गतिं विदधाते स्म समं दिवानिशम् ॥ ४८ ॥

जलदागमजाड्यसंकुचत्स्थितयः क्वापि चिरं दिशोऽखिलाः ।
अभवन्ध्रुवमक्षिगोचरा द्युमणिद्योतसिसेविषावशात् ॥ ४९ ॥

सततोदकवर्षसंसजज्जलनीलीहरितो हरित्तटान् ।
करकौशलतः सुधाकरः कलयामास किलातिनिर्मलान् ॥ ५० ॥

वयमर्यमवैभवद्विषः कृतिनः प्रागधुना कृशाः स्वतः ।
इति तूर्णमिदं समीपतो धनदस्याम्बुधरा दिशं ययुः ॥ ५१ ॥

सलिलानि सरस्वतां घनैरभिवृष्यात्महृतानि वर्षितुम् ।
तुहिनानि तदाहृतेर्दिशा तुहिनग्रावक्शा व्यागाह्यत ॥ ५२ ॥
उचितेऽनुचितेऽपि संभृतान्युदकान्यम्बुमुचः स्थले मुहुः ।
अपवृज्य विपाण्डराः शुचेल्यहसन्काशरुचा दिशोऽखिलाः ॥ ५३ ॥
बुबुधे जगदालयो विभुर्भुजगेन्द्रे शयितो यतो रविः ।
परितोऽपि घनान्प्रलम्बिताः प्रतिसीराः समकोचयद्दिवि ॥ ५४ ॥
उदकानि निपीय वारिदैरुदधेः क्षारतराणि भूरिशः ।
कृशता शरदि क्रमाद्रुजा किमु पाण्डुत्वमपि स्म धार्यते ॥ ५५ ॥
शकलैर्घटितं पयोमुचां सकलं व्योमतलं व्यरोचत ।
शतकोटिविघर्षणैरिव श्लथसंधिर्जगदण्डकर्परः ॥ ५६ ॥
घनदुर्दिनजाड्यमोषधीकमितापास्य चिरं करैर्निजैः ।
स्पृशति स्म सतोषमोषधीः फलभारादिव भावितानतोः ॥ ५७ ॥
जलमध्यजुषो रजस्वला जलजिन्यः सह हंससंसदा ।
रतिमादधतीति लज्जया व्यनमन्किं कलमाः पचेल्मिमाः ॥ ५८ ॥
अपुषन्परमम्भसा घनाः कलमानभ्रगताः शरत्पुनः ।
फलभागभवत्परैधितं फलति द्रागितरत्र भाग्यतः ॥ ५९ ॥
परिपोषिण एव कर्षकाः फलभारच्छलतः पुरो नतान् ।
कलमान्सखलाः कथं लुनन्त्यघुनेत्यध्वनि चुक्रुशुः शुकाः ॥ ६० ॥
मधुरं भुवि शालिपालिकामृदुगीतं मम वा फलं जनाः ।
विमृशन्त्विति विभ्रगानमत्फलिना किं कदलीपरम्परा ॥ ६१ ॥
अभिरक्षितुमात्मनो जनान्कृषतच्छेदतकृत्यलोलुपान् ।
विदलत्परुषः स्म मुक्तिका विकिरन्ति ध्रुवमिक्षवोऽभितः ॥ ६२ ॥
घनबन्धनतः प्रमोचितः कमिता वः शरदेति शोभनाम् ।
न कथं गिरमूचुरादरान्नलिनीनां कलहंसिका रवैः ॥ ६३ ॥
सरसीषु सरोरुहाणि तत्प्रतिबिम्बाश्च बभुर्घनानलीन् ।
अधिगत्य बहिः स्थितानि तान्यवगाढान्यभयाद्भयादपि ॥ ६४ ॥

जलगर्भगते कुमुद्वतीजलजिन्यौ घनभीतितश्चिरम् ।
विधुतिग्मरुचौ विसारितैरुदहार्ष्टामुदकाद्बहिः करैः ॥ ६५ ॥

हरिणं गतमात्मवाहनं कणिशास्वादनकामनावशात् ।
अपहाय पदातिरांशुगो विचचाराम्बुजवीथिकाः शनैः ॥ ६६ ॥

अहितं जलदागमं शरत्तरसापास्यत तद्भवामपि ।
भुवि कीर्त्तिमहो बुभूर्षुभिः सहनीया हि न शत्रुसंपदः ॥ ६७ ॥

श्रयतः स्म चकोरचातकौ भुवि दुर्भिक्षसुभिक्षमम्बुदैः ।
शरदा त्वथ तद्विपर्ययं समयो नैकगुणो हि जन्तुषु ॥ ६८ ॥

कलशीतनयान्न काव्यमुदुदिताद्धौरुदधेर्यदात्मनि ।
शरणागतसादरः स्वान्वबुधे जीवनपुण्यतो हरिः ॥ ६९ ॥

अजनिष्ट हठात्प्रबोधितो हरिरस्मल्लुरोझल्ज्झरैः ।
इति भीतिवशाद्विरापगा जलधिं प्रापुरजातनिस्वनाः ॥ ७० ॥

चलयाम दिगन्तकुञ्जरैः सममेतां विधृतां वयादिति ।
वसुधामिव वप्रखेलनच्छलतः स्म प्रहरन्ति दन्तिनः ॥ ७१ ॥

परहस्तिमदाम्बुसौरभभ्रममाधाय समेतरुच्छदाः ।
निजगन्धभरैर्निरन्तरं करिणो रोषकषायितान्व्यधुः ॥ ७२ ॥

वर्षासु वारिधरवारितदिग्विभागास्वाक्रम्य सर्वमजयज्जगदुद्धतो यः ।
प्रासन्नयशालिदिशि स प्रचुरप्रचारः कामो बभूव शरदीति कथं विचित्रम् ॥

स्वस्वारिक्षितिपालकप्रतिहतिस्वच्छन्दनैकाननी-
पाकारातिनयप्रमाणनिरतैः प्रौढा मुहुर्गोद्धृतैः ।
निःसाणैः सन्तुद्दिरद्भिर्भजन्निनिद्रभावं ध्रुवं
पाथोगशिवरे चिरेण शयितः श्रीआलयावल्लभः ॥ ७४ ॥

सोऽयं नेपालनेतुः पुनरधिनगरि स्थापनार्थं तदीये
सर्वान्दुर्वारगर्वानपि धरणिभृतः सत्वरं निर्जिगीषन् ।
जम्भारातिः सुधर्मामिव धिषणजयन्तान्वितो मन्त्रहेतो-
र्भूपः प्रापत्ताथो सचिवसुतयुतो जातु लक्ष्मीविलासम् ॥ ७५ ॥

युद्धसमुद्धतशत्रुजनत्रुटनप्रभवद्भस्तिहयारितमितस्थितमुस्थिरसद्विभव ।
भव्यकृतिव्यसनक्षमरक्षणकर्मपटो चित्तवसत्तरवल्लभतल्लजनमवटो ॥ ७६ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ७७ ॥

श्रीगोविन्दमखीन्दुवंशमणिना श्रीयज्ञनारायणा-
भिख्येनाध्वरिणा कृते मधुसुधारोधाय मेधाविना ।
सर्गोऽयं नवमोऽप्यभूदनवमः संभावनीयैर्गुणै-
रत्राकद्भुदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ७८ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसात्रि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
नवमः सर्गः ।

# दशमः सर्गः ।

ससुतो वसुधासुधाकरोऽसौ सह गोविन्दमखीन्दुना सभायाम् ।
समगादथ तत्र गोत्रभेदो सजयन्तो गुरुणा यथामराणाम् ॥ १ ॥

प्रभुरेष ततोऽनु भद्रपीठे सचिवेनात्मभुवं समं निवेश्य ।
अपराङ्कमुपाश्रितोपबर्हं विमताज्ञातमुपाविशद्वितन्वन् ॥ २ ॥

प्रभुतत्सुतमन्त्रिणः सभायां परमेते समसस्मरन्वसन्तः ।
प्रथमं मिलितं प्रपञ्चसृष्टेः पुरुषाणां त्रितयं पुरातनानाम् ॥ ३ ॥

सचिवो नृपतेर्नृपो विवक्षां सचिवस्यापि तयोश्च राजसूनुः ।
प्रतिपाल्य परस्परं सभायामदुषन्मौनममी मुहूर्तमात्रम् ॥ ४ ॥

त्रिभिरेकफलाय तैर्विवक्षात्रितयेनोन्मिषितान्तरैरपीपि ।
अपरत्र बुधैरमानितोऽपि प्रगुणत्वेन परस्पराश्रयोऽस्मिन् ॥ ५ ॥

वचनान्यभवन्व्यवस्थितानि त्रिषु तेष्वेकफलानि संमिलन्ति ।
त्रिविधेष्विव शाखिषु द्विजेषु प्रभवेनाविदितानि भाषितानि ॥ ६ ॥

बदरीकुणशोणमक्षिकोणं वसुधायामथ वासवोऽवतीर्णः ।
कृपणासुलभं कृपाणिकायामतनोदाशयमप्यतः प्रकाशम् ॥ ७ ॥

सचिवो नृपतेः स्वतो विवक्षां हृदि जानन्नपि तत्कृतेङ्गितेन ।
स विदन्निव तां ततः प्रगल्भामुचितज्ञो गिरमुज्जगार धीरः ॥ ८ ॥

अवनीन्द्रसमीहिताविरुद्धा सचिवोक्तिर्विधिषु स्वतन्त्रवृत्तिः ।
प्रभवेज्जनताप्रमोदसिद्ध्यै श्रुतितात्पर्यहिता स्मृतिर्यथैव ॥ ९ ॥

प्रबलोऽपि निसर्गतो निदेशः प्रभुचन्द्रस्य परिष्कृतो वचोभिः ।
सचिवस्य हि कल्पते क्रियासु स्मृतिवाक्यैरिव वैदिको नियोगः ॥ १० ॥

अधिचेतसमाहितं त्वदीये करवालानिशकाङ्क्षितं विधेयम् ।
तरसा करणेऽपि तस्य हेतुं धरणीपाल यथातथं वदामि ॥ ११ ॥

युधि वीतकृपा कृपाणिकासावधिप द्वेषिकरोटिभिः कदुष्णम् ।
चषके रुधिरं नवं पिपासुर्विषयानद्विषतः पुरा करोति ॥ १२ ॥

तरवारिलता नृप त्वदीया धिषणेव द्विषतः परैरभेद्यम् ।
हृदयं हितमन्त्रवर्मगुप्तं भृशमेषा त्वरितं भिनत्तु भूयः ॥ १३ ॥
अचिरादनरेन्द्रमन्त्रसाध्यः प्रबलोऽयं नृप पारसीकदेहान् ।
प्रविशन्नसिपन्नगस्त्वदीयः पिबतु प्राणसमीरणान्रणाग्रे ॥ १४ ॥
अधिनेतरयन्ति पारसीका युधि नेपालनृपं पराभवन्तः ।
अधुना खलु चोलकं सहायं विधुनानं तव शासनं बलेन ॥ १५ ॥
नृपचन्द्र नृशंसवृत्तिरास्ते स तथा संप्रति चोलको धरायाम् ।
प्रवदन्ति जना यथा मुनीनां प्रवरं हन्त दशाननं चरित्रैः ॥ १६ ॥
अभवद्बहुकालकूटबाधानुभवस्तोयनिधेश्चिरंतनो यः ।
अधुना स निजान्तरैकवासं सहतश्चोलकमस्य साधनैव ॥ १७ ॥
पथिकान्मिलतः पथिष्वजस्रं बत गोणीकृतमस्त्रिकासु बद्ध्वा ।
मुसलैः स विभो मुहुः प्रहार्य क्षिपति ग्राहमुखेषु निर्निमित्तम् ॥ १८ ॥
वनदंष्ट्रिभिराहता त्वदीयैः कलमालीत्यभिधायिना जनानाम् ।
अधिरोपयतेऽधिरोमकूपं शितसूचीरहह क्षमासितांशो ॥ १९ ॥
पथि तोयपिपासया प्रपासु प्रसितान्दुग्धदिदिक्षयेव पान्थान् ।
स बलादुपहूय तप्तसीसद्रवमेवाहह पाययत्यजस्रम् ॥ २० ॥
इयता वचसा यदेकदेशोऽप्यधुना नाभिहितस्तदस्य सर्वम् ।
चरितं हतकस्य शक्यते तन्न मया वर्णयितुं नमः शिवाय ॥ २१ ॥
भवता नरपालकेन्द्र भग्ने निहते चोलकनाम्नि नीतिमार्गात् ।
प्रभवो न भवन्ति पारसीकाः पुरि नेपालविभुं पुनर्निरोद्धुम् ॥ २२ ॥
सचिवोक्तमिति श्रवःपुटाभ्यां परिगृह्णन्रघुनाथपार्थिवेन्द्रः ।
अगदीदिति दन्तदीधितिभ्यो जनयन्नर्म दिवापि चन्द्रिकाणाम् ॥ २३ ॥
निहते युधि चोलके नृशंसे निहता एव भवन्ति पारसीकाः ।
नरनाथ निजाश्रयस्य बाधे नयसिद्धो न किमाश्रितस्य बाधः ॥ २४ ॥
अवनीन्द्र तवाश्रितस्य पादौ पुरि नेपालविभोः पुनः प्रतिष्ठाम् ।
अयमाशु विधातुमभ्युपायः परमस्मिन्प्रतिभाति किंचिदेवम् ॥ २५ ॥

अविवेकनिधिः स पाण्ड्यभूपो भुवि वेतण्ड इव भ्रमन्मदेन ।
नरपालमृगाधिपे स्वशक्त्या निरपाये त्वयि शात्रवं विधत्ते ॥ २६ ॥

प्रबलं बत शात्रवं स पाण्ड्यः प्रभुचन्द्र त्वयि शौल्यस्यहेतु ।
अधुना तु सचोलकस्य तस्मिन्नपि तुण्डोरविभोः प्रवर्तनेन ॥ २७ ॥

बहुभिर्मृधमेकदा परैर्यत्प्रबलोऽपि क्षितिपालको न कुर्यात् ।
तदमी विषयेषु विप्रकीर्णा धरणीन्द्रो युगपत्त्वया न योध्याः ॥ २८ ॥

अवतंस्य वचस्तदस्य मन्त्री नयसिन्धो रघुनाथमेदिनीन्दोः ।
अवदत्स वदावदप्रवेकः परमानन्दथुबन्धुरान्तरङ्गः ॥ २९ ॥

धिषणा रघुनाथनेतुरेषा धिषणाक्षेपणनैपुणीनिरूढा ।
अतिसूर्यकरग्रहान्पदार्थानतिसूक्ष्मापि विभाति भासयन्ती ॥ ३० ॥

अयतेऽस्य वचोऽनवद्यमर्थं श्रयतेऽर्थो नृपचन्द्र नीतितत्त्वम् ।
तनुतेऽपि च नीतितत्त्वमेतत्प्रकृतेऽतिप्रवणां मतिं विधेये ॥ ॥ ३१ ॥

प्रभुरेष तदेति भाषितेन प्रसवेनेव सदालिमोददात्रा ।
सरसेन फलैकसाधनेन व्यतनीन्मन्त्रिणमुल्लसद्वतंसम् ॥ ३२ ॥

अनयैव किल त्वयानुपूर्व्या वदता कश्चन वैरिणां नृपाणाम् ।
प्रणिधिश्चरितस्य पाण्ड्यभूपप्रभृतीनां प्रहितो विचारणाय ॥ ३३ ॥

नयनं प्रणिधिर्नरेश्वराणां नयमार्गे चरता सदातिशेते ।
असमीपगतार्थबोधकत्वात्परभूपालरहःप्रकाशनाच्च ॥ ३४ ॥

अवनीविभुरान्तरेण चारैरपि पश्यन्नयनेन सावधानम् ।
द्विषतः सहजान्हि धर्मबुद्धेर्विषयस्यापि सदा जयत्ययत्नम् ॥ ३५ ॥

द्वितयाधिकमेकमक्षि शंभोर्नृपतेस्तद्वयमान्तरं स्पशश्च ।
मथिता प्रथमो हि काममन्यो महिपान्काममुखान्षडप्यरातीन् ॥ ३६ ॥

प्रणिधिर्द्विगिवोचितानुरागः प्रभुचन्द्रस्य हितप्रवृत्तिहेतुः ।
श्रवणानिलङ्घनस्वभावः प्रथतेऽलोकपरिष्क्रियानभिज्ञः ॥ ३७ ॥

प्रणिधिः किमिति प्रतीपभूमीपतिसंदोहचिकीर्षितं विवेक्तुम् ।
प्रहितः स चिरायतीति सोऽयं पतिरव्यी मनसा ततो जगाद ॥ ३८ ॥

बहुरूपपटुः प्रवेश्यमानः प्रथकोऽथ प्रतिहारपालकेन ।
समलक्ष्यत मङ्क्षु स स्पशोऽयं सविधे तस्य शतक्रतोरवन्याः ॥ ३९ ॥

प्रणिपत्य स पत्युरुर्वरायाः प्रणिधिस्तस्य पदं भयानताङ्गः ।
वसनाञ्चलगर्भितेन पाणिद्वितयेनाभिदधे मुखं पिधाय ॥ ४० ॥

फलपर्यवसायि भाषितं मे श्रुतिकाले न विभो सुखाकरोति ।
इति संप्रति मौनमाश्रितं मामिह संभाषयते चराधिकारः ॥ ४१ ॥

वचनानि यथायथं श्रुतानि व्यवहर्तुं श्रवणे कटूभवन्ति ।
प्रयते न बिभेमि चाभिजानन्प्रभुचन्द्रस्य तवाधिकं विवेकम् ॥ ४२ ॥

अनतिश्रुतमायतिक्षमं च ब्रुवति प्रेम तवास्तु भूप मा वा ।
अनवेक्ष्य हिताहिते निजे हि स्वविभोः पश्यति सौख्यमेव भृत्यः ॥ ४३ ॥

इति वाक्यमुदीरितं चरेण प्रबलन्यायपरिष्कृतं निशम्य ।
जगदेकहितैषिणाथ सोऽयं जगदे तेन मुदा जनाधिपेन ॥ ४४ ॥

प्रभुकार्यपराङ्मुखः स्वकार्यं कलयन्स्वप्रभुकार्ययोः समानः ।
प्रभुकार्यपरो धुतस्वकार्योऽप्यवनीन्दोरिति मन्त्रिणस्त्रिधा स्युः ॥ ४५ ॥

विविधान्सचिवानिति स्वरूपैर्विनयैरप्यविवेचनीयभेदान् ।
त्रिभजन्यवनीविभौ यथावद्वसुधा तद्भुजवश्यतां प्रयाति ॥ ४६ ॥

प्रतिभा श्रुतमौचितो धृतिश्च प्रभुचन्द्रस्य तदा फलन्ति कामम् ।
सचिवा यदि सन्ति पञ्च षड्वा स्वविधेयेषु समुद्य जागरूकाः ॥ ४७ ॥

अखिला नरपालमात्मकार्यप्रवणा हन्त तदा प्रतारयन्ति ।
यदि न स्वसमो यथार्थवेदी निजकार्ये धुरि नीतिमानमात्यः ॥ ४८ ॥

अभिधत्स्व चरोऽप्यमात्यकल्पः प्रभुकार्यैकपरायणो यतस्त्वम् ।
प्रतिघो न भवेदनेन किं तु प्रमदो मे स्पश तेन मा स्म भैषीः ॥ ४९ ॥

प्रणिधिस्तदनुज्ञया प्रणीतप्रणिधानः प्रणिपत्य यावदर्थम् ।
अयतिष्ट यदिष्टमष्टदिक्षु प्रभवेत्तत्प्रभवे निवेदयिष्यन् ॥ ५० ॥

भुजधाम तदेव भूवलारेर्गणनीयं यदहो गणे रिपूणाम् ।
स्वपुरेषु रहो विनूयमानं प्रणिधिर्गूढपदं मुहुः शृणोति ॥ ५१ ॥

महिपस्य यशस्तदुच्यते यन्महिसिन्धौ वलयाचलेन्द्रसीतौ ।
परिपूरितमन्ततः समन्तात्प्रथते दुग्धमिव स्वकीयभूम्ना ॥ ५२ ॥
भुजधाम यशोऽपि तादृशं ते भुवि नान्यस्य तदेतदच्युतेन्द्रो ।
अहमेव विदिक्षु दिक्षु सीमास्वपि सर्वासु चरंश्चिराय जाने ॥ ५३ ॥
विजिता बहुधा पृथक्पृथक्ते विमताः पाण्ड्यमुखास्त्वया रणेषु ।
मिलिताः शपथैर्मिथः समस्ताः पुनरप्यत्र पुराभिषेणयन्ते ॥ ५४ ॥
अनुजीव्य चिरादनन्यमित्रं पुरि कर्णाटकभूपतिं सबन्धुम् ।
निजनाथमहो निहत्य कैश्चित्समगात्पाण्ड्यनृपेण नागराजः ॥ ५५ ॥
पुरि तत्र हते सपुत्रपौत्रैः सह कर्णाटनृपे तदावशिष्टम् ।
परिगृह्य तदात्मजं स याच्चप्रभुरन्यैश्च समाययासतीह ॥ ५६ ॥
अचिरङ्गममी मिलन्ति यावद्युधि मत्ता रिपवः सपाण्ड्यभूपाः ।
पुर एव ततोऽमुना विधेयं तव कर्णाटनृपात्मजेन सख्यम् ॥ ५७ ॥
स मनोजवसौ न किं विधेयात्सुमनोराजनिभः सुतो विधेयम् ।
अहिताः सकला युयुत्सया ते प्रहितास्तत्र मिलन्तु भूप मा वा ॥ ५८ ॥
लघुना वचसा युतः कथं वा रघुनाथक्षितिपस्य तं प्रतापम् ।
कथयाम्यहितैर्यदीययाहं कथया विस्मितयान्प्रयुक्तयेव ॥ ५९ ॥
नृपधूर्वहता निजे तनूजे वसुधायास्तटिनीवरावृतायाः ।
वितनुष्व रणेऽवसौ विशङ्को विमतानाशु विनाशयत्ययत्नम् ॥ ६० ॥
अनपायविभुत्वहेतुमेतस्य निपाय स्पशवाक्यमच्युतेन्द्रः ।
प्रति तं वचनं प्रमोदमानः प्रथितं किंचन वर्णयांचकार ॥ ६१ ॥
विजिता बहवो दिशामधीशा बहुधाभोजि वसुंधराप्यशेषा ।
विदुषामपि संभृतं व्यतारि द्रविणं किं परमस्ति मे विधेयम् ॥ ६२ ॥
परमेतदिहावशिष्यते मे परमेऽस्मिन्रघुनाथनाम्नि पुत्रे ।
अवनीभरमाकलय्य शत्रूनयनीतानमुना विज्ञापयिष्ये ॥ ६३ ॥
तदमुं धरणीतलेन्द्रतायामभिषिञ्चे त्वमपि द्रुतं विकीर्णैः ।
सविधं मम कैश्चन क्षितीन्द्रैः सह कर्णाटनृपात्मजं नयस्व ॥ ६४ ॥

उदितामिति सोऽयमुर्वरेन्द्रोर्वदनात्कल्पकमञ्जरीं वतंस्य ।
निरतो महति स्पशो विधेये निरगाद्भूभृदगारतोऽतिवेगात् ॥ ६५ ॥

निजपार्श्वभुवं प्रसाधयन्तं नृपचन्द्रो रघुनाथपार्थिवं तम् ।
अवलोक्य स मन्त्रिणाथ वाणीमवतंस्यामिति वर्णयांबभूव ॥ ६६ ॥

सरिदीशवृता वसुंधरेयं चतुरङ्गेण पुरी युता बलेन ।
अखिला प्रकृतिर्भवत्प्रधानाप्यमुनेदं प्रथमं भवेत्सनाथा ॥ ६७ ॥

तनयो विनयोज्ज्वलो विवेकी धरणीन्दोर्यदि भूनेन धन्या ।
अपरस्य स तादृशोऽस्तु मा वा यदमुष्यापि भृतिः परैर्विधेया ॥ ६८ ॥

प्रभुरात्मभवस्य नीतिपद्याप्रवणस्य प्रकृतिप्रमोदहेतोः ।
न किमा नरपालकत्वशक्तेर्नगरीकोशबलादिरक्षितेव ॥ ६९ ॥

पटुधाम्नि सदाश्रवे कुमारे प्रतिपक्षा नृपतेर्यथा त्रसन्ति ।
अखिला स्वमतादृशे तु तस्मिन्नवजानन्ति तथा बत स्वपक्षाः ॥ ७० ॥

विनयादिगुणोज्ज्वलत्वमुर्वीविभुसूनुत्वमपि द्वयं न यस्य ।
परिपालयिता स चेत्प्रजानां क धनं कात्मभवाः क वा स्वदाराः ॥ ७१ ॥

अवनीं पितुरागतामरक्षन्परमस्याः प्रभुरन्यपालितां च ।
अवनीन्दुरिमामपि प्रशासन्नि विधास्तेऽधममध्यमोत्तमाः स्युः ॥ ७२ ॥

अवनीविभुमन्त्रिणौ स्वतन्त्रावपि संभूय विधेयमेकमेव ।
कुरुतो नयने यथैकमर्थं कुशले द्वे युगपन्निशामयेते ॥ ७३ ॥

महिपस्य महाहवेषु यष्टुः सचिवोऽध्वर्युरितः सहार्त्विजीनैः ।
अधिकारिभिराहुतव्य मन्युज्वलने भाति सुताज्ञयाय राज्ञः ॥ ७४ ॥

सचिवो धिषणेव सांख्यशास्त्रप्रथिता कर्मसु कर्तृभावमेति ।
फलभागिदमात्मवत्पृथिव्याः परिणेता क्वचिदप्यसक्त एव ॥ ७५ ॥

कुशलो रघुनाथभूमिपालः कुलकूटस्थपुरोहित त्वयायम् ।
अधुनाहमिवात्तराजनीतिः प्रभवेद्भूपरिपालने मखीन्द्रो ॥ ७६ ॥

निखिलाप्यमुना नृपालनीतिः स्वत एवाधिकृता विभो तथापि ।
अहमत्र नियोगमद्य कुर्वे भवतोऽशून्यमिति स्म भाषते सः ॥ ७७ ॥

नृपतेस्तनुजेन नीतिशास्त्राध्ययनोत्साहवतायमर्थ्यमानः ।
अथ तामनुमध्यजीगपद्यामधिगम्यैव कलामयन्ति राज्यम् ॥ ७८ ॥
प्रभुतानवयौवनाभिरूप्यप्रवरत्वप्रमुखैर्युतो गुणौघैः ।
द्विपतो यदि शास्ति काममुह्यान्विभुरेतेन तदा मही सनाथा ॥ ७९ ॥
अजितं पुरमिन्द्रियप्रचारैररिभिः काममुखैः सदात्र दुर्गम् ।
पुरमप्यपरं भुयोऽधिनेतुः स्वत एवावति शात्रवावरोधात् ॥ ८० ॥
सहजारिसुतावरोधभृत्यस्वसमीपप्रभुशत्रुभूपतिभ्यः ।
अवितोऽपि बलेन शङ्कमानो भुवि याति क्षितिपः स्थिरां प्रतिष्ठाम् ॥ ८१ ॥
प्रभुरेव यतः स्वयं प्रजानामिह चामुत्र च साधको हितेषु ।
परिपालनमात्मनोऽपि भुक्तिप्रमुखैस्तद्व्यसनैः प्रजार्थमेव ॥ ८२ ॥
प्रभुरात्मनि वेदताप्रतीतिः प्रकृतीनां सततं यथा स्वतः स्यात् ।
प्रतिपालयतामसूस्तथैव प्रभुरित्येव हि न प्रजा रमन्ते ॥ ८३ ॥
अखिलैरपि भूभृदात्मभिन्नैर्निशं स्वस्वसमीहितैकतानैः ।
प्रतिकार्यमयं प्रतार्यमाणो भजति स्वाभिमतं फलं कथं वा ॥ ८४ ॥
स्वकुलक्रमवेदिभिर्विशुद्धैः प्रभुकार्यैकपरैः सदाप्यमात्यैः ।
यदि मन्त्रयते यथावदुर्वीपतिरस्याशु तदा फलं करस्थम् ॥ ८५ ॥
अविमर्दसहादवेत्य यत्नाद्द्विपयादस्फुटवृत्तयोऽपि चोराः ।
वसुधापतिना व्यपोहनीयाः स्थितमक्ष्णो जठरात्तृणं यथैव ॥ ८६ ॥
मन्त्रो महीन्द्रस्य मनोपिनार्थप्राप्तः पुरस्तात्परगोचरश्चेत् ।
अमित्रमित्रं तनुभूरिवात्मनाशैकहेतुर्न किमञ्जसा स्यात् ॥ ८७ ॥
अवैद्यकापेक्षि रसायनं मतेरदेहसादि स्थविरत्वमात्मनः ।
अनस्तिभारा श्रवसोरलंक्रिया गुरूपदेशो न गुणाय किं नृणाम् ॥ ८८ ॥
रमा तावद्वसेद्गेहे राज्ञो यावन्न जायते ।
इयती संपदेवालमित्यश्लोल्तरा मतिः ॥ ८९ ॥
वसु कोशभृतं वसुंधरापतिरुग्रैः परिपालयेद्भटैः ।
सरितां पतिरूर्मिणोर्यथा मणीन्सलिलस्थान्प्रकरेण यादसाम् ॥ ९० ॥

त्वमु दत्तमल्पमपि याञ्छितं सतां सहसाभिवर्धयति संपदं विभोः ।
प्रतिपादितं परिमितं पयोमुचां सलिलं यथा मणिगणान्सरित्पतेः ॥९१॥

मधूनि पुष्पाणि मधुव्रतो यथा वसूनि गृह्णन्वसुधाधिपो जनान् ।
हठात्परैर्दुर्ग्रहमा प्रदानतः फणामणीं पालयतां फणी यथा ॥ ९२ ॥

दुर्गे गुप्ते दुर्जयोऽपि स्वशक्त्या कुर्याद्वासं कोविदो भूमिपालः ।
श्वेतद्वीपे सिन्धुखेये न किं वा लक्ष्मीजानी राजधानीमतानीत् ॥ ९३ ॥

प्रभोर्न किं बलवति दुर्बलेऽपि वा प्रवर्तते द्विपति समं पराक्रमः ।
मृगाधिपो मदकरिणो मृगस्य वा विनिग्रहे भवति हि तुल्यविक्रमः ॥

अखिलानपि सद्गुणान्विभोरभिबोभोति हि नास्तिकं मनः ।
असितं व्रणमान्तरं यथा महतीं हीरमणेरनर्घताम् ॥ ९५ ॥

उपेक्ष्यतां प्रभुरुरुविक्रमोत्सुकः कदर्यमप्यसुहृदमाः कथं नयेत् ।
तमः पराभवतितमां रिपुः स कोऽप्यहर्पतेरपि नृणते महो न किम् ॥ ९६ ॥

ससाध्यसाक्रमविधिसाग्रहा रिपुग्रहाः कथं क्षितिपतिभिः सुनिग्रहाः ।
अभूतिकैरनिशममन्त्रचिन्तनातुरायणैरवनितुपारदीधिते ॥ ९७ ॥

समीपतो रिपुरपरः सखा ततः सखा रिपोस्तदनु सुहृद्रिपुः पुरः ।
द्विषत्सखस्य च नृपतिः सखेत्यमी विभोर्जयोन्मुखमनसः पुरःसराः ॥ ९८ ॥

पार्ष्णिग्राहाक्रन्दयोः शत्रुमित्रं पश्चादाद्यो मित्रमन्यो जिगीषोः ।
आसारौ द्वावेनयोश्चारिमित्रे विख्याताः स्युर्नीतिविद्भिर्महीन्द्राः ॥ ९९ ॥

विजिगीषोररेश्चान्यो विदिग्देशे स मध्यमः ।
असंयुजोः संयुजोश्च निग्रहेऽनुग्रहे प्रभुः ॥ १०० ॥

विजिगीषुशत्रुमध्यमविषयेभ्योऽन्यत्र यः स्थितस्तेषाम् ।
शक्तः स युजामयुजां संरक्षणशिक्षयोरुदासीनः ॥ १०१ ॥

इत्यात्मजं निजमसाविममच्युतेन्दुरत्यादरेण धृतनीतिमथादधानम् ।
आविःप्रमोदमुचितामवलोक्य वाणीं गोविन्दयज्वतिलकं गुणवानवादीत् ॥

सौम्ये भाविनि वासरे शुभतरे शौण्डीर्यमुख्यैर्गुणैः
प्रख्यातं रघुनाथनामकममुं प्रौढापदानं सुतम् ।
क्षिप्रं त्वं चतुरर्णवीपरिवृतक्षोणीतलप्राभवे
कुर्याः कौतुकतोऽभिषिक्तमखिलैर्गोविन्दयज्वाग्रणीः ॥ १०३ ॥

कुर्वंस्तद्वचनं व्रतंसमुचितं गोविन्दयज्वा ततः
पौराणामभिषेकमङ्गलकृते प्रावीवृतत्संभ्रमम् ।
साऽपि श्रीरघुनाथभूमिरमणः स्वावासगेहं मुदा
प्राग्भारेण समं समाविशदिति प्रह्वैः परीतो नृपैः ॥ १०४ ॥

अक्षुद्रमधुरताद्ग्यदिक्षुद्रवजनककवन सन्नवन ।
उद्धतवृत्तरिपुस्थिरनियुद्धनलभ्राजमानभुजतेजः ॥ १०५ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ १०६ ॥

श्रीगोविन्दमखीन्दुवंशमणिना श्रीयज्ञनारायणा-
भिख्येनाध्वरिणा कृते मधुसुधारोधाय मेधाविना ।
सर्गोऽयं दशमो द्विपन्मदशमोऽप्यासोत्समग्रैर्गुणै-
रत्राकृद्ददविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ १०७ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
दशमः सर्गः ।

---

# एकादशः सर्गः ।

अथ मागधाः कतिचिदस्य भूपतेः स्वपनोपयोगपरिशोभितं गृहम् ।
अभजन्त मन्दमपनिद्रकञ्चुकिप्रतिहारदेशमुपसि प्रसाधितम् ॥ १ ॥

अनिले भयादिव कुतोऽप्यनागते निभृतप्रदीपनिकुरम्बमेककम् ।
पुरतः स्थितं सहपुरोहितद्वयैर्मगधैरलङ्घि मणिधाम भूपतेः ॥ २ ॥

अवरोजनैरवितमान्तरालयप्रतिहारमत्र दृढबन्धनाररम ।
प्रतिपद्य वर्षवरपङ्क्तिभिः क्षणं प्रघणे समौनमवसन्भयादमी ॥ ३ ॥

उषसि प्रसन्नमतिरुर्वरापतिः शयितः स्वयं स शयनेऽतिशोभने ।
शरदीव वारिधिशयस्तदा जगत्परिपालनैकरसिकः प्रबुद्धवान् ॥ ४ ॥

चरणोपसंग्रहणचातुरीजुषां सुदृशां स्थिते सपदि कङ्कणारवे ।
परिचारिकासु कतिचित्प्रबुध्य त शयितास्वसेविषत सादरा दरात ॥ ५ ॥

अखिलास्ततोऽनु हरिणेक्षणाः क्षणादपरा धृतस्वपनमस्य भूपतेः ।
व्यजनप्रकीर्णवहनादिकं क्रमादुपचारमात्मचरितोचितं व्यधुः ॥ ६ ॥

नवहेमतन्तुचयनाहशोभिनीः परितोऽपरा यवनिकाः प्रलम्बिनीः ।
समकोचयन्मणिगृहप्रभाभरस्थगनासहेव सरसीरुहेक्षणा ॥ ७ ॥

घनसारतैलकलिताभिवर्धनाः कतमा दधुर्धुरि तथा प्रदीपिकाः ।
हरितां समस्तमवकाशमाशुगो नयते यथा नवनवं स्म सौरभम् ॥ ८ ॥

गमकादिभेदकमनीयमुल्लसद्वति तानसंततिकरम्बितार्जवम ।
समयोक्तरागविधया शनैः परा जगुरस्य मानवजगत्पतेर्गुणान् ॥ ९ ॥

स्वमुखांशुसाधिमसमानवैभवं मणिदर्पणं मृगदृशान्यया पुरः ।
विधृतं रूपेव विभुरैक्षत क्षितेस्तलिमं विसृज्य तनुपूर्वभागतः ॥ १० ॥

मगधा विबुध्य महिपप्रबोधनं समयज्ञयौवतसमग्रगानतः ।
द्रुतमस्य ते स्तुतिकरम्बितैर्गिरां प्रथनैर्जगुर्गमकभेदमानितम ॥ ११ ॥

अयि सुप्रभातमिदमस्तु ते तथा रतिनाथरूप रघुनाथभूपते ।
प्रकृतं यथा प्रकृतिकाङ्क्षितं भवेदखिलावनीभृतिकृतेऽभिषेचनम् ॥ १२ ॥

अभिषेकमङ्गलकृतेऽधिमण्डपं प्रभया निबद्धपटमौक्तिकस्पृशा ।
विधुता ह्रियेव विजहाति भूप सा तरसा महांसि दिवि तारकावलिः ॥
स्वपयःसमाहृतिविदत्सरिद्वरप्रहितो मुदेव पतिरेष रोचिषाम ।
अभिषेकमङ्गलमवेक्षितुं रयादुदयाद्रिशृङ्गमुदितोऽधिरोहति ॥ १४ ॥
विगहन्महस्कमतिविघ्नलाञ्छनं कुहचित्स्वजत्कुवलयप्रमोदनम ।
द्रवति क्षितौ दिवि च राजमण्डलं त्वयि भास्करेऽप्युदयभाजि संप्रति ॥
स्वमिवानुरूपपतिका वसुंधरा भवतीयमद्य भवतोऽभिषेचने ।
सुचिरादितोव शुभलाभतो विभो शनकैर्दिशा हसति शातमन्यवी ॥ १६ ॥
मलिनाशयाः प्रतिदिशं मलिम्लुचैरभिसारिका गतिमपावृतां निजाम ।
तरसा त्यजन्त्यनिमिषेन्यदूषितस्तमसा भवत्यनिनाथ सत्पथः ॥ १७ ॥
भवतो रवेरपि च पादमाहितं धरणीभृतस्त्वरितमेव मौलिभिः ।
भुवि ये वहन्ति भगमुग्रशार्वरप्रभवाः पदेषु सुलभं प्रशाम्यति[?]॥ १८ ॥
अधुना विभो परिचिताखिलागमा विचरन्ति भो. सरभसं द्विजातयः ।
भवतो वसुग्रहणतत्पराशया हरिदन्तराक्रमणलोलुपाश्च ते ॥ १९ ॥
कमलाभिवर्धनकराः करा रवौ त्वयि चाधुनाभ्युदयवर्तिनि क्षणात ।
सकलङ्कराजकरसादितं मुहुः सुखयन्ति चक्रमखिलं स्वभावतः ॥ २० ॥
इति ते विनुत्य धरणीश्वरं चिरं वचनैरमं तदनु वन्दिनो बहिः ।
अगमन्कवाटयुगमप्यथादधुः कनकोज्ज्वलं विघटितं मृगादृशः ॥ २१ ॥
पुरतो विधाय स पुरोहितो हितौ दधिदूर्वमाशु धरणीभृदागतौ ।
शुभवादिनौ सुललितैर्विलोकितैः कृपयापि तावनुगृहीतवानयम ॥ २२ ॥
अबलाकराब्जमवलम्ब्य मेदिनीवल्लभित्प्रकम्पिवसनाञ्चलाञ्चितः ।
उपभुक्तचन्दनभृतोत्तरच्छदादुदतिष्ठदेष तल्पिमादुदारधीः ॥ २३ ॥
कपिलां समीपमथ काचिदञ्जसानयति स्म गां नरपतेस्तलोदरी ।
पुरतो वलन्निजपुरोहितद्वयः प्रकटं व्यधादयमपि प्रदक्षिणम् ॥ २४ ॥
अवतार्य भूषणगणानहर्मुखस्नपनोचिताकृति मुदा शनैरयम ।
स महीपतिः शयनसद्मनि स्थिता मणिवेदिमत्र महितामुपाविशत् ॥ २५ ॥

व्यजनेन काचिदबला वलत्कुचद्वयलोलहारवलयोत्तरीयकम् ।
घनरावदूककरकङ्कणं शनैरमुमीशितारमवनेरवीजयत् ॥ २६ ॥

सुमजालकेन सुरभीकृतं पुरा सृजती कचैरपि समग्रसौरभम् ।
उपगृह्य तैलमुचितं स्म तं परा सुदृगभ्यनक्ति वसुधासुधाकरम् ॥ २७ ॥

मणिपीठवर्तिनि महीपतौ पुरो निदधुर्घटास्तुहिननीरपूरितान् ।
कनकाहितान्कतिचन स्तनद्युतिप्रतिरोधिताप्रतिघगौरवादिव ॥ २८ ॥

अपरा परागमवनीशकैशिके नवचन्दनद्रवकृतं नतोदरी ।
सरलीकृते नखमुखैः सकौशलं व्यतनोत्कपोलचलमानकुण्डलम् ॥ २९ ॥

मृगनाभिगन्धरससमिश्रितैर्हिमैर्नृचन्द्रमा मृगदृशा नखंपचैः ।
कलशेन रत्नखचितेन सोऽन्यया स्नपितोऽजनि स्वविभुतोचितं शनैः ॥

स्नपितो विमृष्टसलिलन्द्वयोंशुकै रमणीय एष रमणो भुवः स्वतः ।
अखिलैर्विनापि नवरत्नभूषणैररुचत्ततोऽधिकमहो महोभरैः ॥ ३१ ॥

शशिनं नभोगमतिशैत्यदुःसहं सहसा विहाय भुवि चन्द्रिकामसौ । ॥
स्वमिवागतां नृपतिचन्द्रमा नवामवसिष्ट धौतरुचिमंशुकद्वयीम् ॥ ३२ ॥

लघुधूपतो ललनयाधिवासिताः स्वत एव सौरभवहा विभोः कचाः ।
प्रभुवैभवप्रकटनाय केवलं परथा यतो भवति सिद्धसाधनम् ॥ ३३ ॥

उपविश्य पीठमुचितं वसुधारमणः स नैकविधरत्नवर्मितम् ।
कुटिलभ्रुवा मृगमदेन मेदुरान्कुरलानबन्धयत कोमलानयम् ॥ ३४ ॥

अधिरोपितेऽधिकुचमन्यया शयद्वितयेन रत्नमुकुरे विभुस्तदा ।
प्रतिबिम्बितो धुरि पराभिरीक्षितो हृदयं तदीयमिव संगतः स्वयम् ॥ ३५ ॥

मृगनाभिचित्रकमधान्महीपतिः कुरलैर्मधुव्रतकुलेन चोदितम् ।
स्वजनेषु कंचिदिव सख्यसिद्धये धुरि नासिकाकनकसूनसंनिधौ ॥ ३६ ॥

भसितं सितं धरणिपालमण्डलीविभुनामुनाध्यधि विशेषकं धृतम् ।
स्वत एव रम्यमपि वक्त्रमंशुमत्सृजतः स्म कीर्त्तिरिव तस्य राजते ॥ ३७ ॥

कमिता भुवः सुमनसां कदम्बकैश्चिरमादरेण शिरसोपलालितः ।
स्वयमप्यलालयत तान्ययं तथा कृतिषु स्फुटं हि घटते कृतज्ञता ॥ ३८ ॥

मकुटादिभिर्मणिविभूषणैरसाववनीपलारिरखिलैरलंकृतः ।
भगवन्तमम्बुरुहिणीपतिं शनैरुपहृत्य भक्तिमधिकामुपास्थित ॥ ३९ ॥
प्रतिभूषणं मणिषु पद्मिनीविभुं प्रतिबिम्बितं नरपतिर्वहन्नयम् ।
त्विषि कोटिसूर्यनिचयस्तदा भयादवलोकितश्चिरमहो वधूजनैः ॥ ४० ॥
स्वमहोभरादिव सरोजिनीपतिं दिवि भीतिसंकुचिततेजसं पुरः ।
अनिमेषमेव महिपोऽवलोकयन्नयमस्तवीदथ गिरार्जवस्पृशा ॥ ४१ ॥
प्रणवाधिवासितमिदं प्रभो त्विषां तव बिम्बमावसति यत्तदादिमम् ।
उदिति त्रयीविदुपलालितं महः कमलेक्षणं जयति काञ्चनाकृति ॥ ४२ ॥
अभिवृष्य भूमिममितौषधीं करैरभिवर्ध्य चन्द्रमधिकामृतं सृजन् ।
अनिशं हविर्भिरमृतैस्तथा भवान्सुरलोकमर्क नयते सुभिक्षताम् ॥ ४३ ॥
सकृदाहिताश्वनहनं सदा रथो तनुपे सुरक्षितिधरप्रदक्षिणम् ।
फलमस्य रात्रिदिनभागवेदनं मिहिरास्य च श्रुतिमितक्रियार्जनम् ॥ ४४ ॥
अखिलां त्रयीमुदहरद्विचिन्त्य यं महिदेवभावजनकं मनुं विधिः ।
अमुना विसंध्यमपि किं त्विषां विभो भवता विना हतिपरोऽभिवन्द्यताम् ॥
जगतः स्वयं भजसि यच्चराचरद्वितयीमयस्य दिननेतरात्मताम् ।
परमं त्वमेव स महः परे सुरा भवतो विभूतिपरमाणवो न किम् ॥ ४६ ॥
अनुमासमिन्दुमतिभास्वरं करैरपि पावकं निशि निशि प्रकल्पयन् ।
महसां विभो मम महोभिरुज्ज्वलैरपि भूतलं निखिलमावृतं क्रियाः ॥ ४७ ॥
इति कैश्चिदेनमिनमुक्तिनामकैः ससुमैश्चिरेण समपूजयत्प्रभुः ।
फलसाधनैकपटुभिर्महागमप्रथितैः सदात्विपरिशीलनोचितैः ॥ ४८ ॥
शशिमौलिमाधवसदार्चनाविधिप्रसितद्विजप्रकरवेदभासुरम् ।
पुरतः स्थितं स सुरपूजनागृहं रघुनाथभूमिरमणः समासदत् ॥ ४९ ॥
मृगनाभिचन्द्रघुसृणादिमिश्रितैर्नवचन्दनैरजनि नैकजातिभिः ।
प्रसवैश्च यत्प्रतिदिनं सुरार्चनास्वविविक्तभेदगुणसौरभावृतम् ॥ ५० ॥
द्विजवेदघोषणवितीर्णया न किं प्रबभौ यदप्रतिहतं प्रतिश्रुता ।
बहुधावकर्णनबलोपशीलितं तमुदीरयत्किमु तदानतिक्रमम् ॥ ५१ ॥

सततस्थितत्रिपुरगत्नुशेखरद्युतिभिर्विधूततिमिरे यदन्तरे ।
वयमादृता इति ववल्गुरुच्चकैस्तपनीययष्टितति प्रदीपिकाः ॥ ५२ ॥
व्यजयोजनानिलचलं वरागरुप्रभवं व्यतत बहु धूममण्डलम् ।
परितोऽपि यत्र पटुभिर्मृशं मणिद्युतिभिर्महाभयधुरं भ्रमत्तमः ॥ ५३ ॥
त्रिविधोपचारकृतिविश्रुतैर्द्विजैर्हरिशंकरौ विधिवदर्चितौ पुरा ।
अवनीं स्पृशन्नवयवैर्यथोचितं रघुनाथभूमिरमणोऽभ्यनन्दत ॥ ५४ ॥
अयमुत्थितो नृपतिरादरात्पुरो रघुवीरतामधिगतं रमाविभुम् ।
वचनैर्दशावनरवैभवाञ्चितैश्चिरमस्तवीदथ शिरोधृताञ्जलिः ॥ ५५ ॥
अनुवर्णमब्धिकुहरेऽमरद्विपा शिथिलीकृताः सुचिरमादिमा गिरः ।
त्वरितं विचेतुमनसा त्वया धृता जलनिर्निमेषपशुपभूमिका विभो ॥ ५६ ॥
असुरद्रुतैः पुरहरस्य सैन्धवैरधिसिन्धुदेशमुपबाडबं स्थितम् ।
इति तान्विदन्ननिमिषेन्द्र तत्पदैर्विचरन्पथाङ्कनभृता त्वमाहरः ॥ ५७ ॥
अनिमेषता चिरमवाप्य वारिधेर्जठरे कुहापि पतिता जरद्भयो ।
उदहारि तूर्णमुपरि त्वया ततो भवतु स्थिरा वृषपरम्परेति किम् ॥ ५८ ॥
निभृतं विभो त्वयि निरन्तरं न किं कमठाकृतौ जयति कल्पितासिका ।
युतचक्रवालधरयोगपट्टिका वसुधा समाधिवशगेव योगिनी ॥ ५९ ॥
अवनेस्त्वयाधिकरणेन भूयते तव चाणुना भजनधन्यचेतसा ।
इति चिन्तयामि कमठेश्वरान्यथा कमसे न संकुचितगात्रमात्मनि ॥ ६० ॥
अधिष्ठपीठमनिशं तथा कथं क्षितिरुह्यते न कमठ क्षिता त्वया ।
अधिकं सपद्मधरिता यथानया कमलालया हृदयकल्पितस्थितिः ॥ ६१ ॥
पतिता बलादनुपयोधि दंष्ट्रया किटिरूपिणो मम मही कृतव्यथा ।
बहिरुद्धृताविति सदा पहस्यमूमधिपृष्ठमादिकमठ त्वमादरात् ॥ ६२ ॥
अनतिस्फुटां स्ववसनावगुण्ठनादर्शनं कुतोऽपि कुपितार्हभूमिकाम् ।
उपरि श्रियोऽपि हृदयोचितस्थितेरधिदंष्ट्रमादिमकिटे त्वमातनोः ॥ ६३ ॥
जठरं प्रविश्य जलधेर्हतामरद्विषता जवेन किटिवेषपोषिणा ।
तलवर्तिपङ्कलवधारमादरादधिदंष्ट्रमीश भवतावनी धृता ॥ ६४ ॥

महिदार एव महिदारतां पुनः प्रकटीकरोतु वपुषा भवान्पुरः ।
अनजत्कथं सुरहरिर्निसर्गतो नृहरित्वमोश भुवि नीतिगर्हितम् ॥ ६५ ॥
अवहन्त शास्त्रभुजान्तरारं न क्षमायतं दलयितुं नखानि ते ।
कुटिलानि वज्रमयकुञ्चिकात्मतां नयतो जवेन नरसिंहतां वपुः ॥ ६६ ॥
दलितं पुरा हृदयमट्टहासतो दनुजेशितुर्दलयितुं वयं पुनः ।
प्रसिता दशापि परमित्यवाङ्मुखा नखरा ह्रियेव नरसिंह तेऽभवन् ॥ ६७ ॥
जठरं स्वभक्तजनकं विदारितं कथमात्मभिः सपदि कर्कशं रिपोः ।
इति चिन्तया नरहरे ह्रियापि ते नतमौलयः किमभवन्नखाङ्कुराः ॥ ६८ ॥
कठिनं समग्ररणकण्डु वासवं द्विषतो हृदादि हरिणा विना घृणाम् ।
नखराङ्कुरैर्विनतकोटिभिर्दृढैर्दलनं किं विदलनोपधैस्त्वया ॥ ६९ ॥
त्रिपदीमिताप्यधिगा दीयते त्वया जगतो यदीयमधुना जगत्त्रयी ।
इह संगतोऽस्मि विबुधेन्द्रचोदनादिति दैत्यवञ्चक वचस्तवैधत ॥ ७० ॥
भवते पदक्रमपरीक्षणानि ये बहुवेदिनः परमहर्षमञ्जसा ।
कलयेयुरिष्टमुपकल्पयेत्यलं बलिवञ्चने तव बभूव भाषितम् ॥ ७१ ॥
बलिवञ्चके कपटवामनाकृतौ भवति त्वयीति जगति प्रथाभवत् ।
बत वामनेन सहवाससंशयात्प्रतिरोधिनापि पथि धावनं वरम् ॥ ७२ ॥
अपराजहंसगतिरात्मना बलादजनि क्षमेत्यनुशयेन तां पुनः ।
भृगुतोरदारितहिरण्यनाभजः सहसानयः किमु सराजहंसताम् ॥ ७३ ॥
अनुशिष्य भूतलमशेषमेककः स्वभुजप्रतापभवनेन कः परः ।
बत तत्सुतेन भवता भृगोर्विना महितामदान्निजमखस्य दक्षिणाम् ॥ ७४ ॥
स्वभुजोदिताप्यजनि संततिर्हता भवतेति विस्मयपदं न तद्यतः ।
अवधि प्रसूरपि तथापि पावनी स्थितिरित्यदः श्रयति चित्रता पुनः ॥ ७५ ॥
विकृतात्मना कपटतो विजित्य भूरमराहितप्रभुमयाच्यतेति किम् ।
असकृद्विमाथितनृपान्वयो महीमखिलामदाद्भृगुसुतस्ततो भवान् ॥ ७६ ॥
असकृन्निहत्य भुवि राजमण्डलीमखिलां त्वया भृगुसुतेन गौरवम् ।
परिचिन्त्य खण्डपरशुः स केवलं परिचितोऽजनिष्ट बत राजशेखरः ॥ ७७ ॥

दलिते त्वया गिरिशधन्वनि क्षितिं धर्मानिमिश्रलां द्रुतममंसत प्रजाः ।
बत तद्गुणत्वभयकम्प्रगूढपादिभुमस्तकस्थितिवितीर्णदुर्दशाम् ॥ ७८ ॥

स्वनृपान्वयद्विषति शस्त्रपाटवं कृतवानितीव गिरिशस्य कार्मुकम् ।
दलयन्पराजितममुं ततो भवान्कुलघातिनं रघुवर क्रुधा व्यधात् ॥ ७९ ॥

विपिनानि मातृवचसा विभो भजन्निजमातृवाक्यनियतो यतो भवान् ।
अधिभार्गवं किमकरोत्स्वमातरं हतवन्तमत्रिदशदेशवर्तिनम् ॥ ८० ॥

निहता प्रसूर्गुरुनियोगतः पुरेत्ययशो गतं गुरुजनापकारिणा ।
वचसा विमातुरपि वैभवं भुवो भवतो विहाय बत गच्छतो वनम् ॥ ८१ ॥

शरणागतेऽभिरतिस्तवात्मनोऽप्यधिकेत्यसूचि भवतायनीभुवः ।
अभिरक्ष्य वायसमनिष्टमंशुमत्तनयाहितं च विदलय्य वालिनम् ॥ ८२ ॥

स्फटिकान्तरग्निमिव भास्वतो महः प्रतिबिम्बितं तव विभो पराक्रमम् ।
हनुमत्यजीजनदहो यदन्वयव्यतिरेकितैव वहति प्रमाणताम् ॥ ८३ ॥

अमहीचरत्वनियतेऽमरप्रभावत्रकोर्णितां दशमुखस्य तत्त्वतः ।
दलनात्पुरैव दयया विभो व्यधास्त्वमहो कथं नु खरदूषणक्षिपाम् ॥ ८४ ॥

अखिलं जगद्धतमजीवनं भवेदिति लोकबन्धुजननेश्वर त्वया ।
अतिवेलकोपविषयोऽपि नार्णवः सगरैरशोषि मुखसंभृताग्निभिः ॥ ८५ ॥

रघुवंशरत्न लवणोदमाग्रहेऽप्यभिलक्ष्य शोषकशराग्निवैशसात् ।
लवणप्रचाररहितं तलं क्षितेरनुजात्मना कथमहो भवान्व्यधात् ॥ ८६ ॥

दशकण्ठमात्मजनितामरेन्द्र दुर्दशकं वरेण कुरुते स्म यस्त्वया ।
विनिपात्य तस्य नु विधेन्तास्त्वतो रघुनन्दनेन रचिता विडम्बना ॥ ८७ ॥

अखिलान्दिशामधिपतीन्निर्जित्य यो दशकंधरो व्यतपत त्वमेषु तम् ।
समरातिनः समुतमाश्रयं बलादकरोस्तराद्भुतकरो हि साधिमा ॥ ८८ ॥

निजसेवको कपिनिशाचरेश्वरौ प्रभुतां नयन्प्रथमतः स्वयं ततः ।
प्रभुरस्मि यः स्म स भवान्दयानिधे रघुवीर मे दिशतु राज्यमूर्जितम् ॥ ८९ ॥

जनने यदीरमदिशजनोचिते जनिरप्यभूत्तव तथोपकारिणी ।
अवनीभरापनयनं यथाकृथाः परिवर्जितस्वपरपक्षचिन्तनम् ॥ ९० ॥

मथितैककार्जुनमदं सुतं भृगोरतिशय्य केलिगलिताङ्‌गनद्वयः ।
समरे त्वमर्जुनसपक्षता पुनः कथमातनोः कथय नन्दनन्दन ॥ ९१ ॥

अपसारथित्वमवलोक्य यत्नतः समरेऽभ्यजीजपत शक्रसूनुना ।
यदरीन्मुहुर्यदुपते पुरा भवानिह हेतुरिन्द्रसहजत्वमेव ते ॥ ९२ ॥

निजभक्तपार्थरथसारथिर्भवान्निखिलान्रिपून्यदमुना व्यजापयत् ।
अधुना मयापि तदये विभो मनोरथसारथिः सादि जापयत्वमून् ॥ ९३ ॥

अधिकृष्य यौवनमपालयद्भुजे प्रमदासु काममतिबालकोऽपि यः ।
भवतो यदुप्रवर तस्य किं न तद्वद कामपालसहवासिताकृतम् । ९४ ॥

व्रजयौवतस्य वसनानि निर्घृणं विजने हृतान्यनवयन्विभो त्वया ।
वसितांशुकां कुरुवरप्रियां व्यधाः सदसोऽत्यबोधि सरलं जनः कथम् ॥ ९५ ॥

भवतोऽपि कृष्ण सबलं प्रयत्नतो नरकच्छिदो युधि न किं वदाधिकाः।
प्रसितास्त्वदङ्घ्रिभजनैरयत्नतो धुतनैकभेदनरकाः स्वतो यतः ॥ ९६ ॥

सुममेकमेव सुदृगा पुरार्थितं भवता व्यतारि बत दैवतस्तरुः ।
अभिवाञ्छितादधिकमद्य मे ततस्त्वमुपाहर त्वरितमीश वैभवम् ॥ ९७ ॥

अवनेश्चिरादपनिनीषुणा भरं निखिला हता निरवशेषमात्मना ।
इति चिन्तयेव सुगतत्वमेयुपा भवतातिकारुणिकता प्रकाशिता ॥ ९८

षडभिज्ञ भोः सकलशून्यवादिनां गुरुरेव साधु कुरुपे स्म दूषणम् ।
बत सर्वतन्त्रपरतन्त्ररूपया सकलात्मकस्य तव सत्तयानया ॥ ९९ ॥

रुषितेन निश्वसितरोधिनोऽखिलश्रुतिदूषणेन सुलभेतरौजसः ।
यवनान्निहन्तुमनसा यतिष्यते कलिसंक्षये जगति कल्किना त्वया ॥ १०० ॥

सुगतात्मना श्रुतिरदूष्यत त्वयेत्ययशो यदास तदपाकरिष्यसि ।
सकलत्रयीविधिसमापकान्खलान्युगपन्निहत्य युधि कल्किविग्रहः ॥

वदनोदितैर्ध्वनिरसप्रसन्नतामधुरस्वभावमहितैर्मणोचकैः ।
अमृतासवप्रसवशेखरं क्षितेरयमार्चयत्तदनु देवमीश्वरः ॥ १०२ ॥

अभिकाय शैलदुहितुर्निगाधिभूशुभिकाय सर्वविबुधाधिकाय ते ।
मलयाद्रिगुप्तवलयाय मौनिहृन्निलयाय देव कलयामि वन्दनाम् ॥ १०३

कलयानिशं शिरसि भूषितं महः कलयानि किंचन यदिष्टदेवताम् ।
सहजानि तत्परिहरिष्यति ध्रुवं सहजानि दुष्परिहराण्यघानि मे ॥ १०४ ॥

भव तेजसा शमितमृत्युना नमो भवते जनान्स्वगुणवन्दिनोऽवते ।
भसिता यतादरवशेन वर्ष्मणा भसिताय शश्वदपि शोणरूपिणे ॥ १०५ ॥

चतुराननादिबुधवन्दिताङ्घ्रये चतुराय भक्तजनगोपणेऽनिशम् ।
प्रभयेन वैशसजुषो नमोऽसि मे प्रभवे नगेन्द्रजनुषो भवन्तु ते ॥ १०६ ॥

भवतः कलां शिरसि यां नदीजलभ्रमघूर्णितां सकलमिन्दुमुल्लिखन् ।
प्रविविक्षतोर करशंखरस्तया भवतापमाशु भव मे व्यपोहय ॥ १०७ ॥

द्वितयान्यदृष्टिविभवा त्वयि प्रभो शरणागताः षडपि ये सदा द्विषः ।
शमयन्ति काममहितान्भवन्ति ते तव काममात्रजयिनः स्वतोऽधिकाः ॥

गरलं महद्ग्लपितसर्वविष्टपं गलभूषणं वितनुते भवानतः ।
सुरदीर्घजीवननिदानमोषधीवरवल्कमस्ति शिरसीति चिन्तये ॥ १०९ ॥

गरलं मुहुर्ग्लपितबाह्यविष्टपं नियतं भवान्निजगले नियच्छति ।
जठरान्तरस्थितचराचरव्यथाशमनाय हन्त शमनान्तक प्रभो ॥ ११० ॥

विधिमाधवाविदितमस्तकाङ्घ्रिरप्यलमल्पभक्तनुतिमानसाश्रयः ।
अपि हन्त वाङ्मनसयोरगोचरो हर कीदृशो तव पदाव्ययस्थता ॥ १११ ॥

परशुः स्वभक्तभरणे सपावकः करयोर्यतः शपथकर्मणे धृतः ।
प्रसितं मृकण्डुभवसंहृतौ ततो हर यत्नतो यमममारयद्भवान् ॥ ११२ ॥

द्वितयात्परा महति देव तेऽलिके हृदये च दृष्टिरतनुर्हृतः कथा ।
प्रथमं तवेति विशयं पराकरोष्यनिशं त्रपामुकुलयानयालिके ॥ ११३ ॥

स्वविनाशितं स्मरमजीवयत्पुनस्तव वामलोचनमिति त्रपावशात् ।
निटिलस्थमीक्षणमभून्निमीलितं सततं वधूपुरुषसंगतात्मनः ॥ ११४ ॥

हर यत्पुरा युधि हसो महौजसो दितिजान्पुरीत्रितयवासिनो बहून् ।
तृणतूलदाहमधिकं ददाह तद्गलगुप्ततीक्ष्णगरसाह्यचेष्टितम् ॥ ११५ ॥

तनयद्रुहे जनकदारिणेऽपि ते शरणागताय दिशतः सरूपताम् ।
यजति स्मरन्य इह देवतान्तरं धरचाप तस्य हि तदेव शिक्षणम् ॥ ११६ ॥

गोचरोऽपि वचसामगोचरः पावनोऽपि जगतामपावनः ।
अन्तकोऽप्यघवतामनन्तकः कस्तव स्तवविधिक्रमक्षमः ॥ ११७ ॥

संपादितान्यपि सुरारिशरादिमानि चन्द्रावतंस विजहद्युधि साधनानि ।
तिस्रः पुरस्त्वमदहस्तृणतूलदाहं हासेन येन स तवादिशदुन्नतत्वम् ॥

वृन्दारकेषु यदि कोऽपि भिनत्ति मृत्युं
जायेत वा यदि न जातु जगत्यमुष्मिन् ।
साम्यं बिभर्तु स तदा तव चन्द्रमौले
भग्नास्त्वहंकृतिरतो भवतोऽभिवृद्धा ॥ ११९ ॥

हालाहलं हर नियम्य परानियाम्यं
सर्वान्बुधान्सपदि यः स्वनतानरक्षत् ।
दृष्टानशिक्षत पुनर्युधि दक्षयज्ञे
तानेषु कोऽपि तव तस्य कथं समः स्यात् ॥ १२० ॥

आख्याति चेत्स्वमनिदंप्रथमत्वमेभागादलम्बि हर धातृकरोटिदाम ।
अन्यस्य सोऽयमपि ते सदृशस्तदा स्यादाद्योऽहमेव जगतीत्यनृतोऽभिमानः ॥

अलोकदृष्ट्या विजितोऽभवन्मया स्मरः पुरेति स्मरता त्वया पुनः ।
तनुश्रियाप्येष जितस्तपोवने मुनिस्त्रियस्तद्विमुग्धा हि मोहिताः ॥ १२२ ॥

न्यग्रोधमूलवसतिर्यमिषु प्रभाव्य नाथ प्रबोधमथ तान्कुरुषे विमुक्तान् ।
इत्यादिमं वचनमीरयति द्विजं त्वां देवेषु मामुपदिश त्वमतो विबोधम् ॥

आदौ पाणिनिना त्वमक्षरसमाम्नायोपदेशेन यः
शब्दानामनुशासनान्यकल्पयः शास्त्रेण सूत्रात्मना ।
भाष्यं तस्य च पादहंसकरवैः प्रौढाशयं तं गुरुं
शब्दार्थप्रतिपत्तिहेतुमनिशं चन्द्रावतंसं भजे ॥ १२४ ॥

अज्ञातप्रभवैर्वचोभिरखिलैरालम्बि धर्मप्रमा-
हेतुत्वं विविधाध्वरक्रमकृतिष्वेकायनैश्चोदनैः ।
तेषामध्वरकर्मणामधिपतिं त्वामीश नाराध्य व-
न्धर्मानर्जयितुं न शक्ष्यति जनो दक्षोऽप्यदक्षोऽथ वा ॥ १२५ ॥

सव्यङ्गं भुजगोपवीतपवनात्साशङ्कमन्याङ्गतः
साकूतस्मितफुल्लगल्लफलकं स्पृष्ट्वा समाश्वासयत् ।
तत्संस्पर्शवशेन जातपुलकं त्वं मानसे तन्महः
सामानाधिकरण्यधाम जयसि स्त्रैणस्य पौंस्नस्य च ॥ १२६ ॥

हर्षं दक्षिणवामभागकरयोरन्योन्यमाश्लेषणा-
देष्यन्तं भुजयोर्द्वयो कथयते यस्य स्फुरन्तौ स्फुटम् ।
प्रायस्ताण्डवलास्यकर्मनिपुणौ पादौ यदीयौ समं
भूमा त्वं निरतस्तपोधनमनोभूमावसौ राजसे ॥ १२७ ॥

व्यत्यस्तात्मीयपार्श्वद्वयमधिमुकुरं स्वस्य वीक्ष्यानुबिम्बं
यो जानन्नूनमन्यां निजतनुमपयुक्तान्यपार्श्वद्वयोकाम् ।
अद्याश्लेषं मनेयं वितरति बहुधेत्यन्तरानन्दजातै-
र्हासैर्हृष्यत्कपोलो विभवसि भगवानर्धनारीश्वरस्त्वम् ॥ १२८ ॥

इत्थंकारमनेकवारमवनेरीशो गिरां कन्दलैः
स्तुत्वा सिन्धुसुतापतिं शशिकलाचूडं तथा भक्तिमान् ।
आशीर्भिः स पुरस्कृतः क्षितिसुरैराम्नायविद्याकरैः
प्रौढश्रीरभिषेकमण्डपमभिप्रस्थातुमैच्छन्मुदा ॥ १२९ ॥

परिचिन्त्य पयोनिधिस्थितां यदुनेतुर्नगरीमिवोत्तराम् ।
रघुनाथ समुद्रवर्तिनीं रचय द्वारवतीं च दक्षिणाम् ॥ १३० ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ १३१ ॥

श्रीगोविन्दमखीन्दुवंशमणिना श्रीयज्ञनारायणा-
भिख्येनाध्वरिणा कृते मधुसुधारोधाय मेधाविना ।
जातो दत्तसुचित्तनिर्वृतिदशः सर्गोऽयमेकादश-
स्तत्राकद्वदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ १३२ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
एकादशः सर्गः ।

# द्वादशः सर्गः ।

संभारपूर्णमभिषेकचतुष्कमस्मिन्प्रस्थातुमुद्यतवति क्षितिपालमौलौ ।
अनेष्ट पुष्परथमेकमथाधिरोहयोग्यं सुयुक्तहयगोयुगमाशु सूतः ॥ १ ॥

गाङ्गेयचित्रधुरमात्तकशाकसूतसंनाहिताश्वयुगलं समवृत्तचक्रम् ।
सोल्लोचमध्यधि विटङ्कतटं कृतेन शोभावता मणिगणैः शिखरेण युक्तम् ॥

राज्याभिषेकसमये रघुनाथनेतुरासादितं सुचिरमस्य पुरोजनानाम् ।
सिद्धं मनोरथमिव श्रियमावहन्तं वीथीमुखे विविधचित्रवितानरम्ये ॥ ३ ॥

भूमीरथैः प्रतिपदं पुरवीथिकासु क्लृप्तैः समन्त्र कृतदर्पणगाङ्किरूपैः ।
अक्ष्णां शतैः कुतुकतः परितोऽनिमेषं निर्वर्ण्यतेऽयमिति निश्चितमध्वनीनैः ॥

सौरभ्यमाशु सुमतोरणदामपङ्क्तेः सारं हरन्ति मधुपा वियति भ्रमन्तः ।
इत्युद्धृतैर्ध्वजपटैरिव राजधानी वीथीमुखे मुहुरमून्विनिवारयन्तम् ॥ ५ ॥

वीथीपथे नृपजनैर्विरजीकृतेऽस्मिन्धूलीभरान्कुसुमतोरणवल्लयः स्वान् ।
त्यक्त्वालिनां पदतलैः प्रहता भवन्ति हन्तेति मौक्तिकरुचेव हसन्तमुच्चैः ॥

धूलीभरेषु सुमतोरणविच्युतेषु सद्यस्तदासवभरैः शमितेष्वथापि ।
सिक्तं हिमैर्नृपतिसेविभिरादरेण वीथीतलं विलसितं विदधानमुच्चैः ॥ ७ ॥

हर्म्येषु रत्नखचितेष्वभितः स्वकीयान्याधाय साधु शतशोऽप्यनुबिम्बनानि ।
राज्यासनाय निरते रघुनाथभूपे पुष्यन्मनोरथशतं पुरमावहन्तम् ॥ ८ ॥

श्रीतक्रमान्विभजता स्वगुरोर्हितेन नान्दीमुखं प्रतिसरं स नरेन्द्रचन्द्रः ।
राज्याभिषेचनकृते रचयन्विधेयं हर्षेण पुष्परथमेनमथाध्यरुक्षत् ॥ ९ ॥

रथ्यौ विमुक्तधृतरश्मि ततः प्रतोदं व्यापारयन्निजकरेण वलत्कशेन ।
युक्तौ स पुष्परथहेमयुगे नृपेण संचोदितः सपदि चालयति स्म सूतः ॥

रथ्याधिकस्यदवशेन रथाङ्गयुग्मनेमिभ्रमिप्रविसरन्निजरेणुदम्भात् ।
आचन्द्रतारकमसौ वहते पुराणामित्येनमीक्षितुमिव क्षितिरुत्थितासीत् ॥

रथ्यापथे स्म चिरमस्ति रथस्य चारः
सद्यस्तथा मनुजचन्द्रमसाश्रितस्य ।
विद्वेषिणां महिभुजां विधुता यथा स्या-
न्मार्गे गतिर्जगति हन्त मनोरथानाम् ॥ १२ ॥

रथ्यां प्रसाधयति पुष्परथेन दीप्त्या
रत्याविभोरपि वरे रघुनाथभूपे ।
एणीदृशामथ तदीक्षणकाङ्क्षिणीनां
कोलाहलः सपदि कोऽप्यधिसौधमासीत् ॥ १३ ॥

प्रासादपङ्क्तिरुच्चत्प्रमदाभिराशु भूयो गवाक्षविवरैः स्फुटितारुरोकैः ।
द्रष्टुं समस्तमपि पौरजनप्रकर्षमक्ष्णां शतैरिव मुदा सहितानिमेषैः ॥

धूपा नवागरुभवा धुरि जालकेभ्यो
रथ्यापथाद्विविधवाद्यरवाः पुरा वा ।
व्याप्तास्तदेति विशयेन विशां विनैव
व्याप्नन्समं सकलमाशु दिशावकाशम् ॥ १९ ॥

लाजाः सुमान्यपि मुहुर्ललनाजनेन हर्षादवर्षिपत हर्म्यजुषा नृपाले ।
पौरश्रिया स्वरमणे परिणीतयेऽस्मिन्नार्द्राक्षता इव शिरस्यवकीर्यमाणाः ॥

काचित्पुरो महिशतक्रतुनन्दनेन वीथी व्यलङ्घ्यत परं न विशा ततोऽनु ।
प्राप्ताजनिष्ट विशिखापि विलोभनीया नानापणेषु निचितैर्नवरत्नसंघैः ॥

वैश्यालयप्रचुरवज्रगवाक्षमार्गादाहृत्य वायुरगरुद्रवसौरभाणि ।
यत्नाद्दतेऽचलत यत्र सुवासिताङ्गान्पान्थान्सदापि रचयन्परिरम्भणेन ॥

क्रय्यैर्लसन्ति सुदृशः स्म कथं न वृन्दैः
पुण्ड्रेक्षुभिः सुमनसामपि पुष्पभृङ्गैः ।
स्वालोकमात्रजनुषां स्मरसंततीनां
यस्यां जयप्रहरणैरिव दीयमानैः ॥ १९ ॥

नानामणीहरिणनाभिमधुद्रवाद्यैः क्रय्यैर्यदर्यसुदृशः क्रयिकान्पदार्थैः ।
वाक्यैर्विदग्धरचनैरपि वञ्चयित्वा सर्वेन्द्रियाण्यवशयन्त सुखेन कान्ताः ॥

पूपा नवाज्यपिठरोदरपच्यमानाः
स्वैः सौरभैः सिमिसिमारवसाह्यमन्यैः ।
घ्राणेन्द्रियाभिलषितं कथमध्वगानां
शश्वन्न यत्र विदधुः श्रवणैकसाक्षि ॥ २१ ॥

वाचाललोहवलयैः पथि वैश्यडिम्भाः पान्थेषु पाणिपिठरोभरितानपूपान् ।
आवेदयन्त परमात्तगता यदन्तः पौरेषु तत्परिमलाः परितोऽखिलेषु ॥ २२ ॥

गोधूमपिष्टकलनाल्लघुघूर्ण्यमाननानाघरट्टकटुनादकरम्बितापि ।
आस्वादलोभसृणिकाभिधरूढसञ्ज्ञं या सौरभैः कुतुकमत्र जने वितेने ॥

वैश्येषु केचन महीपतिवर्यमेनं वृद्धाः समेत्य विनयेन वृता वधूभिः ।
नव्यैर्मुहुर्मुहुरथो नवरत्नसंघैर्हर्षादहंप्रथमिकागममभ्यषिञ्चन् ॥ २४ ॥

वैश्यालयप्रचुरवैभवसाक्षिणीं तां वीथीं विलङ्घ्य स ततोऽनु विवामधी(?)ः ।
अन्यामपि स्वरथचक्रपरिक्रमेण धन्यामसाधयत वारवधूनिवासम् ॥ २५ ॥

मोचायुगान्यनुगृहप्रतिहारदेशं भूतानि तत्र बभुरुत्पललोचनानाम् ।
वक्तुं स्थितानि किममुष्य वसुंधरेन्दोः सद्यस्तदूरुकलितस्वविभापहारम् ॥

तामिन्दुबन्धुवदनास्तरसाभितोऽपि प्रासादपङ्क्तिषु गताः प्रतिभूमिभागम् ।
अम्लानमभ्रमरपादहतं कटाक्षैर्नीलाब्जतोरणगतं निबिडं बबन्धुः ॥ २७ ॥

आकारसौष्ठवलवानुकृतेरुदीतमागस्त्रसन्मदविलासुहृदात्मजस्य ।
चेतांसि साम्यदृशां स्वदमानधन्या तत्रोपहृत्य तरसा युगपन्निरास ॥ २८ ॥

मन्नान्यहो महिभृतो महति प्रभाणां
तस्या झरे समधिकं तरुणीमनांसि ।
कामं प्रतारकतया कथितोऽपि भूयो
भूयो न्यमज्जयत पुण्ड्रलताशरासः ॥ २९ ॥

प्रायेण तत्र नृपतेर्भ्रमितैः पुरस्ता-
त्कर्पूरदीपनिकरैः कलभाषिणीभिः ।
दृष्ट्यात्मनोविभुमहांसि दिनप्रदीप-
च्छायानि बभ्रमरहो स्वत एव सद्यः ॥ ३० ॥

वीथीमिमामपि स यामविलासिनीनामुल्लङ्घ्य भूपतनुभूरुदितप्रमोदः ।
हैमं चतुष्कमगमत्समया सभेगं पट्टाभिषेककरणाय परिष्कृतं तत् ॥ ३१ ॥

पट्टाभिषेचनकृते प्रमदेन तूर्णमभ्यर्णमागतममुं सुतमच्युतेन्द्रः ।
गोविन्दयज्वमणिना कुलमन्त्रिणायं प्रत्युज्जगाम पुरतः प्रचलत्पुरोधाः ॥ ३२ ॥

अभ्युद्गतं जनकमच्युतभूपमेनं गोविन्दयज्वसहितं कुशलः श्रुतेषु ।
आलोकयन्सपदि पुष्यरथादथायं हर्षादिवावतरदथो रघुनाथभूपः ॥ ३३ ॥

पित्राच्युतक्षितिभृता रघुनाथभूमीपालकाहितः प्रकृतिभिः परितः परीतः ।
पट्टाभिषेचनकृते प्रसितं चतुष्कं हर्षेण सादरमनीयत हैममेतत् ॥ ३४ ॥

उन्मेषकारि भुवि भास्वर उर्वरेन्दोरुद्वेलभोगमिदमित्युदधिर्नभोगम् ।
उन्मेषयन्रविविधू किमुपागतोऽभूद्यत्राहृताम्बुनिभतः समुदीक्षणाय ॥ ३५ ॥

आत्माभिकाश्रयदुराग्रहभूभृदोघजेता महीवलजिदेष विभात्यमुष्मिन् ।
इत्येनमीक्षितुमिव क्षितिलोकनाथं यत्राहृताम्बुवपुषा सरितः समेयुः ॥

छेत्तुर्विभोरपुनरुत्थिति शार्वराणां यत्रोदयं जिगमिषोर्हसीव दार्ढ्यम् ।
अध्येतुमर्कशशिनौ सरिदम्बुपूर्णसौवर्णरौप्यकलशच्छलतः स्म भातः ॥

नक्षत्रसंततिमहांसि नरेन्दुरेष यस्मिन्सदापि सहितेति वचः स्वनिष्ठम् ।
तारा विबुध्य नु वितानपटावलम्बिमुक्तामणीकपटतो मुहुराश्रयन्त ॥ ३८ ॥

स्वा चन्द्रिका भवमिता स्वयमर्कभीत्या
प्रायेण पुष्यति वितानपटात्मनेदम् ।
हर्षाद्विवेति यदधीश्वरमिन्दुरेन-
माह्लादकत्वमनयन्निजमादरेण ॥ ३९ ॥

सर्वोन्नतोऽप्यहमनंसि सदाशिवेन प्रागित्यमर्त्यशिखरी प्रबलो भविष्यन् ।
आचन्द्रतारकमधीशितुरस्य यत्र भद्रासनं मणिमयं किमु पर्यणंसीत् ॥ ४० ॥

यत्राङ्कुरार्पणमकारि यथावदादौ भूमीसुरैर्नं परमागमबोधधन्यैः ।
वर्णाश्रमस्थितिविभागवदावदेन धर्माङ्कुरार्पणमनेन धराभृतापि ॥ ४१ ॥

पट्टाभिषेचनमुदं परमानबालो यत्नान्निरीय महिपस्य यदन्तरालात् ।
अत्यादरेण वितरन्हुतहव्यगन्धाञ्जोघुष्यते स्म पटहस्वनतो जनानाम् ॥ ४२ ॥

औदुम्बरे मणिगणाञ्चितमर्मपट्टसंवर्मिते रजनकेन स भद्रपीठे ।
शार्दूलचर्मविहितास्तरणे नियुक्तस्तस्मिन्न्यविक्षत ततो रघुनाथभूपः ॥ ४३ ॥
भद्रासने निवसतः प्रथिते मणीभिः साम्यं तदा परममुष्य समाश्रयिष्यत् ।
शृङ्गे पतिः स महसामधिरत्नसानु तुङ्गे कदापि यदि तोषवशाददृश्यत् ॥
सर्वौषधैर्दधिमधुद्रवसंभृतैस्तमुच्चार्य मन्त्रमुचितं स्वहुतावशेषैः ।
गोशृङ्गकोणनिहितै रघुनाथभूपं गोविन्दयज्वगुरुरभ्यषिचन्मनीषी ॥ ४५ ॥
दूर्वाक्षतप्रसवरत्नसुवर्णपूतैः सर्वाम्बुराशितटिनीसरसां पयोभिः ।
गोविन्दयज्वगुरुणा कुशली स भूयस्तत्राभ्यषिच्यत ततोऽनु पुरोहिताभ्याम् ॥
हर्षेण तं तनुजमच्युतभूवलारिरत्राभिषिच्य विविधैरुदधेः पयोभिः ।
कन्यागणैर्भटवरैर्गणिकाभिरेनमप्यभ्यषेचयदयं तदनु क्रमेण ॥ ४७ ॥
वस्त्रद्वयं विभुरवस्त वसुंधरायाः सोऽयं निरङ्कुशशिसोदरमादरेण ।
प्रत्यर्थिदानपटुताप्रभवे समङ्गे स्वं सेवनीयमिव सस्पृहमाश्रयन्त्यौ ॥ ४८ ॥
भद्रासनस्थितिविधिप्रथितं विभूत्या नित्याग्निहोत्रभवया निटिले महेन्दोः ।
आचन्द्रतारकमधीश्वरतानिदानं गोविन्ददीक्षितगुरुः कुरुते स्म पट्टम् ॥ ४९ ॥
बद्ध्वा मुखेन्दुमनिशं बुधघर्षणेन स्वस्याभिवृद्धतरसर्वकलाविलासम् ।
नन्तुं समागतमधान्नृपालमौलिज्योतिर्गणं मणिकिरीटशरीरभाजम् ॥ ५० ॥
शत्रुं तमो महिपतिः स्वमहोनपोह्यं बाह्यं निरस्यति सदा बहु चक्रवालात् ।
तज्जोभिरित्यहिमदीधितिरस्य पादमाश्लिष्यति स्म मणिहंसकविभ्रमेण ॥
आजानरम्यतरमूर्तिरपि क्षितीन्दुरुत्तेजितस्तरुणिमोदयनेन भूयः ।
भूयोऽप्यधत्त मणिभूषणजालकेन सोऽयं विभूषितवपुः सुषमाविशेषान् ॥
आरक्षितुं कुवलयं कमलानुकूलं हातुं सदाहिभयमप्यमृतांशुरेत्य ।
इन्दुं पटुत्वमवनेरिव याचमानश्छत्रात्मनाध्रियत तं समया जनेन ॥ ५३ ॥
बाह्वोः समं रिपुबलक्षपणैकधाम्नोर्जाते किमस्य महतो जगतीवलारेः ।
विश्वत्रयं सपदि वीजनलौल्यदम्भादद्वे चामरे क्रमितुमुद्यममावहेताम् ॥
सौवर्णकाहलरवैः सहितो जयाङ्कभेरीध्वनिर्दिविषदध्वनि जृम्भमाणः ।
सद्यो महीपतियशःस्थगनैकहेतुं ब्रह्माण्डमावहदिव प्रतिघेन भिन्नम् ॥ ५५ ॥

संभूय तत्र विविधं सविधे विधेयाः सर्वावनीवलयशासनभाग्ययोग्यम् ।
भूमीभुजो नरपुरंदरमेनमेत्य राजोपचारमुचितं रचयांबभूवुः ॥ ५६ ॥

भद्रासनस्थितिरमुष्य परप्रणामविद्यां त्यजन्ति मकुटानि त्रिभुवनभाजाम् ।
अव्याकृतिश्रममदत्तकशाभिघातमध्याप्य हन्त गुरुतामवलम्बते स्म ॥ ५७ ॥

सिंहासनस्थितिरमुष्य चिरेण बोधदीपान्सदाश्रयणदीप्रविभाविशेषान् ।
द्वेष्येषु वैभवमहानिलदीनदीनानस्नेहकल्पनमनावृति पर्यपुष्णात् ॥ ५८ ॥

आरोढरस्य नृपपीठमवापुरङ्घ्रयोः
सोपानतां विनमतां मकुटानि येषाम् ॥
अव्याहतं महिभुजा चिरमंसकूटा-
स्तेषां भुवे स्म वितरन्ति विहारसौख्यम ॥ ५९ ॥

प्राणंसिषुर्नरपतेः पदयोस्तथास्य भूपाः पदाङ्गदमणीपुषितैर्मयूखैः ।
फालेषु धातृलिखिता निजभाग्यरेखाः सद्यो यथा बभुरिवाञ्जनसारलिप्ताः॥

कालानपेक्षजलपूरकवेरकन्यमस्मिन्नवग्रहदुरासदमभ्रपङ्क्तिः ।
संरक्षति क्षितितलं सकलं नरेन्द्रचन्द्रेऽभ्यवर्षद तिसस्यसमृद्धियोग्यम ॥ ६१ ॥

भूमीसुरान्मणितुलापुरुषादिमानि दानानि तत्र स महान्ति धरावलारिः ।
नीत्वा जवेन युगपन्निगमागमाढ्यान्हर्षेण पोषयितुमैच्छदथो महेच्छः ॥ ६२ ॥

सर्वावनीन्दुसदृशोक्तिसमर्थनैकतानप्रमाणपदवाक्यतरङ्गिताभिः ।
प्रज्ञाभिरम्बुजजनैरिव मूर्तिभेदा विज्ञा बुधास्तमभजन्विभुमत्युदारम ॥ ६३ ॥

आचार्यमुख्यवरणाचरणेन तत्तद्दानेषु तानथ महत्सु धरासुधाशान् ।
वेदार्पणैकनिरतान्विधिनाभिपूज्य नेताध्यवीवसदसौ नियतो नृपाणाम् ॥

स्नातः परेद्युरवनीशतमन्युरेष हृष्टः पुरोहितगणैर्हृदि रामभद्रम् ।
ध्यायन्समग्रनवरत्नघटां यथावदारोपितोऽजनि तुलामतुलोऽपि लोके ॥ ६५ ॥

तौल्येऽधिकार इह दैत्यरिपोस्तुलाया
दण्डे स्थितस्य विभुनाप्रतिमात्मना सः ।
मध्यस्थभावमयते मम का कथेति
भूमण्डलादवनतो भुवि रत्नराशिः ॥ ६६ ॥

तुष्यन्नसावथ तुलातुलितानि रत्नान्येभ्यो विभज्य स वितीर्य यथांशमादौ ।
उर्वीसुरेभ्य उचितानि वसूनि भूपो दीनान्धयाचकततेर्दिशते स्म पश्चात् ॥

आरुह्य काञ्चनतुलामवनीवलारिः स्वर्णं तथा स्म तुलितं ददते द्विजेभ्यः ।
स्वर्णं चिरेण बहुधा निचितं बुधाना सर्वेऽपि ते विकलयन्ति यथा क्षणेन ॥

धैर्येण मेरुमखिलं तुलयन्द्विजेभ्यो
दातुं समुद्यतमना धरणीबिडौजाः ।
दत्ते स्म हेम स धटे तुलितं तुलाया-
मित्यस्ति विस्मयमिदं विदुषां कथं स्यात् ॥ ६९ ॥

भास्वति कगौ तुलामधिरूढे रघुनाथभूमिचन्द्रमसि ।
सुमनःकदम्बपुष्टिं स्वर्णस्तोमाभिवृष्टिरातनुत ॥ ७० ॥

सान्द्रश्रीरघिराजवंशमुदितः साम्राज्ययोगे पुरा
क्रीडाकृत्तसमस्तशत्रुरवनीं केयूरवाहं वहन् ।
भूयोऽप्येत्य हिरण्यगर्भजननं भूत्यैकतानं शुभे
लग्ने प्राभवमेष सर्वजगतीराज्याङ्गमाम्रेडयन् ॥ ७१ ॥

हिरण्यगर्भदानेन भरण्यप्रतिमेन ते ।
धर्माणां विबुधाः शर्म निर्माणामिभ्यतां ययुः ॥ ७२ ॥

विश्वद्वीपमहिप्रदो युधि पुरा वीरो जितः केवलं
शौर्येणेति विचारयन्रघुपतिः शौर्येण दानेन च ।
जेतुं तं पुनरप्युदेत्य निहतद्वेष्यो द्विजेभ्योऽखिलं
प्रायः श्रीरघुनाथभूपवपुषा ब्रह्माण्डमेवादिशत् ॥ ७३ ॥

मम देयवस्त्वपि दिशेन्मनोषितं विदुषामनन्यसुलभं स्वतो यदि ।
प्रभवेत्तदा त्रितरणप्रथा भुवोत्यथ कल्पपादपमिवाददादयम् ॥ ७४ ॥

दत्त्वासौ गोसहस्रं स्मृतिगतमननुष्ठानरूपं निरस्य-
न्नप्रामाण्यं हविर्भिः क्रतुषु घृतमुखैरत्यनल्पैस्तदीयैः ।
प्रत्येकं हूयमानैः प्रतिमुहुरपि तैः संप्रदानैर्द्विजेन्द्रै-
र्दुर्भिक्षं देवलोकेऽत्रिति निगममधादप्रमाणं कथं वा ॥ ७५ ॥

कथमेव हिरण्यकामधेनुः प्रभुणा सा प्रतिपादिता बुधेभ्यः ।
अदिगद्द्विणान्ययाचितान्यप्यधूतामरकामधेनुगर्वम् ॥ ७६ ॥

हिरण्याश्वो दत्तो नृपहिमकरेणोन्नततरः
स्वयं नैव स्थानाच्चलनमपि किंचिज्ज्ञतत यः ।
ग्रहीतॄणां सद्यो भुवि कथमहो स स्वभजना-
द्बुधानां दारिद्र्यं पुनरगमयत्पारमुदधेः ॥ ७७ ॥

अश्वैर्युतं रथमपारहिरण्यक्लृप्तैः सौवर्णमेष वितरन्नपि सार्वभौमः ।
दाक्षिण्यराशिरधिकामथ दक्षिणां च दीनारभूषणगणैर्दिशति स्म सद्यः ॥

हस्तिनं रथमपि क्ष्माधिभर्पयन्नपरितोषतः सताम् ।
हेमहस्तिरथदानमातनोदेष सादरमुदारशेखरः ॥ ७९ ॥

चोलानां समयानपेक्ष्यलहरीसह्यात्मजानां विभुः
स्वं कौदार्यमकृष्टपच्यपखिलं संचिन्त्य सोऽयं मुहुः ।
किं साध्यं भुवि लाङ्गलैरिति सदा कीर्त्यै महत्यै ततो
धात्रीशः किमु पञ्चलाङ्गलमहादानं बुधानां व्यधात् ॥ ८० ॥

अनाहार्यामन्यैरनुशरदमप्यात्मयत्नानुरूपं
सवित्रीं धान्यानां समुदयमयं संततः स्वापतेयम् ।
अनर्घामाकल्पावधि धुतलयां यच्छतां गृह्णतां च
श्रियं दात्रीं धात्रीं स्थिरमतिरदात्सद्विधेयो बुधेभ्यः ॥ ८१ ॥

संचार्यते हि सुकृतेन मनोरथो मे स्वच्छन्दमग्रथितचक्रमितीह लोके ।
विख्यापयन्निव मणीमयविश्वचक्रदानं महीन्दुरतनिष्ट धरासुराणाम् ॥८२॥

आकारेण विबुध्य याचकगणेऽत्राकाङ्क्षितं यच्छतः
साम्यं याचितमात्रदानकुशला सा मे कथं काङ्क्षति ।
इत्युर्वीवलशासनः किमकरोदोर्ग्यजुषा चेतसा
धात्र्यां कल्पलतां निजाश्रितबुधैर्दानेन बन्दीकृताम् ॥ ८३ ॥

आत्मना तुलितमार्पयं मणिस्तोममित्यपरितोषतः पुनः ।
दानकेलिरसिकस्तदाकरान्स स्म किं दिशति सप्त सागरान् ॥ ८४ ॥

रत्नैरनर्घैं रचयन्स धेनुं व्यश्रिणद्यां वसुधासुधांशुः ।
सा रत्नगर्भा समवाप्य धेनुरूपा समानां रुरुचे महार्घैः ॥ ८५ ॥
अभीप्सितं याचितमप्ययाचितं सद्यो ददे वस्तु समस्तमर्थिनाम् ।
इतीव गर्भैर्धितसर्वविष्टपं भूपो महाभूतघटं सतामदात् ॥ ८६ ॥
रत्नहेमरजतादिमैरसौ मेदुराञ्शिखरमेरुपर्वतान् ।
पाण्डराश्वहल्पङ्क्तिसिन्धुरान्कालपूरुषमपि क्रमाददात् ॥ ८७ ॥
वारयोगकरणादिदेवतावारयोग्यबहुदानवैभवैः ।
भूसुरान्निगमशास्त्रसाहितीभासुरानपुपदेष पार्थिवः ॥ ८८ ॥
हेमाद्रिकल्पवचनश्रवणेन भूपो हेमाद्रिमेव बत दानभरैरतक्ष्णोत ।
धर्मार्जनेषु निरतामपि सूचकानां धात्रीश्वरा भुवि गिरं न किमाद्रियन्ते
अवनीरमणेन यानि दानान्यकृतानि स्मृतयो न तान्यजानन् ।
भुवि ये सुधियोऽप्यपोषितास्तैर्न वल्न्ते बत ते नमः शिवाय ॥ ९० ॥
आहूय याचकजनाननुदीतलोभरूक्षोक्ति याचितमर्मोभिररोपलेशम् ।
आकर्णयन्नभिमतादधिकानि वस्तून्यत्यादरादृदिशदेष विशामधीशः ॥ ९१
अभ्यर्थितादपि वसून्यधिकानि भूयो भूयो दिशन्नपि धुतभ्रुकुटीविकारः
अश्लाघनोक्त्यनुदितानुशयं दयालुरालोकते स्म विभुरर्थिजनानवन्याः ॥
आमेरुदक्षिणसरिद्वरमग्रहारस्तोमेन वेदनिधिकोविदसात्कृतेन ।
भूमेर्विधाय बहुधा स्फुटमङ्कनानि क्षेमेण स व्यतपत क्षितिपालमौलिः ॥
सर्वं धैर्यविधूतमेरुविभवे सर्वंसहाया भरं
प्रौढेऽस्मिन्रघुनाथनाम्नि निदधत्पुत्रेऽच्युतक्ष्मापतिः ।
श्रीरङ्गस्थलसंगतो बुधकुलं शीतांशुरुर्वीमिव
प्राप्तः सैष पुपोष शेषशयने भक्तः परे धामनि ॥ ९४ ॥
प्रत्यर्थिव्रजभूरिदानपटुना बाहार्गलेनात्मनः
सत्रीमम्बुधिमिश्चतुर्भिरनिशं सर्वंसहामावृताम् ।
रक्षन्नादरतो द्विबाहुरपरो लक्ष्मीशितेव प्रधी-
रायष्मान्रघनाथभूमिपरिणीरध्यास्त भद्रासनम ॥ ९५ ॥

लोकालोकगताखिललोकालोकप्रियंकराकार ।
प्रमदवनोसुमकेलिप्रमदवशप्रेयसीमनोरसिक ॥ ९६ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ९७ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहितो-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
सर्गं द्वादशमञ्चितामृतदशं स व्यातनोदध्वरी
तत्राकदृदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ९८ ॥

इति श्रीरदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
द्वादशः सर्गः ।

# त्रयोदशः सर्गः ।

चारो नत्वा चोदितः स प्रजानां दृष्ट्वा शत्रुक्ष्मापतीन्द्रप्रवृत्तीन् ।
वक्तुं वेगादागतो वासधाम्नः कक्ष्यामग्र्यामस्य कामप्यवाप ॥ १ ॥
नत्वाधीशं वक्तुमप्येनमुग्र्यां नित्यं राज्ञां निर्यतामायतां च ।
सान्द्राः सेनाः सैन्धवेभप्रणादस्थेम्ना यस्यां सिन्धुबन्धुं हसन्ति ॥ २ ॥
क्ष्वेलाहेषाबृंहितैः क्ष्मापनानातूर्यध्वानो यत्र तूर्णं समेतः ।
स्वोपादानव्यापकत्वानुरूपं स्वच्छन्दः किं जृम्भते संभ्रमेण ॥ ३ ॥
स्फीतान्यब्धौ भूभृतो दानतोयान्येते नित्यं ह्रासयन्तीति मेघाः ।
पार्श्वे मत्ता यत्र पादेषु बद्धास्तान्येवेभाः संततं संत्यजन्ति ॥ ४ ॥
अग्रे यस्याः शश्वदन्योन्यदानामोदाघ्राणैर्हस्तिना साग्रहाणाम् ।
फीत्कारैस्तद्बन्धने यत्नभाजां भीता घोषैश्चोद्भ्रमत्युष्ट्रपङ्क्तिः ॥ ५ ॥
खेन व्योम्नि स्थापितं किं स्थलत्वं नेति प्रायः क्ष्मा निरस्याश्वपङ्क्तिः ।
अभ्रे यस्यां धावते हन्त सद्यो रुद्धे पादोत्क्षिप्तरेणूत्करेण ॥ ६ ॥
धाराशिक्षाधाविनां सैन्धवानां क्षोणी पादैः क्षोभिता यत्र भूयः ।
वेत्राघातव्यस्तभूपालभूषापांसुव्रातैः प्राप्यते मांसलत्वम् ॥ ७ ॥
आपूर्यन्तः प्रौढलोहाग्नियन्त्रेष्वाविध्वनो यत्समीपे समीरः ।
सह्या स्वस्यारातिसैन्यश्रियामुद्योगित्वं नित्यमुद्घुष्यतीव ॥ ८ ॥
हस्तग्राह्यापारलोहाग्नियन्त्रक्रूरैर्हालास्वादनाघूर्णिताक्षैः ।
संनद्धैर्या संततं पारसीकैरुत्साहैर्वा सप्रतीकैरुपेता ॥ ९ ॥
मित्रं नेतुस्तेजसो मित्रमश्वैर्धूल्या धाम्यामाहितं धूसराङ्गम् ।
पार्श्वे यस्याः पङ्क्तिरुर्वीरथानामुच्चैर्माष्टीवोद्धृतैः केतुपट्टैः ॥ १० ॥
स्वस्वावासाक्रान्तिशौर्यापदानं चित्रन्यस्तं यत्र भूशीतभानोः ।
भित्तिष्वारादेक्ष्य भीतिं च लज्जां वेद्यां नम्रा बिभ्रते विद्विषन्तः ॥
आत्मीयाङ्घ्रिद्वन्द्वमेवाभिवृद्ध्यै श्रेयोराशेरस्य भूशीतभासः ।
रक्षां हृष्टः पूजया रामभद्रः कुर्वन्नास्ते यत्र कोदण्डपाणिः ॥ १२ ॥

शौर्योत्साहाश्चर्यसंकेतभूमिं कक्ष्यां दृष्ट्वा तादृशीं कौतुकेन ।
चारः संघे संमिलन्स प्रयत्नादन्यां कक्ष्यामान्तरीमाससाद ॥ १३ ॥
वेद्यां तस्या भूपतेर्वेत्रहस्तैर्द्वित्रैरेव स्थापितान्दत्तवृत्तीन् ।
कालस्येवालोकयत्कायभेदान्सोऽयं भीतो नित्यशुल्कांस्तुरुष्कान् ॥ १४ ॥
सद्योमृष्टस्वच्छताम्रोपमानैर्दीर्घश्मश्रुश्रेणिदीप्तैर्महद्भिः ।
शून्यालोकैरक्षतश्रोत्रयुग्मैर्वक्त्रैः क्रूरान्वक्रितभ्रूकुटीकैः ॥ १५ ॥
उद्भ्रान्ताश्चालुंहितोष्णीषबद्धांस्ताम्रच्छायैः सावर्तसान्गदद्भिः ।
वज्रप्रायैर्वर्मितान्वारबाणैरीरितांम्बूलान्मद्यनित्यावलिप्तान् ॥ १६ ॥
कक्ष्यालम्बिप्रौढकौक्षेयसक्तं तूणीभारं बिभ्रतो दुर्विदग्धान् ।
सव्येनोच्चैः पाणिना शार्ङ्गचापं द्वित्रानन्येनापि तीक्ष्णान्पृषत्कान् ॥१७॥
सर्वत्राथ क्ष्मापसंघोपनीतैर्दीप्तां रत्नस्वर्णदीनारहृप्यैः ।
शश्वत्सोऽयं प्राप संख्यायमानैः कक्ष्यां संख्याजीविनां कांचिदन्याम् ॥
स्वस्वानीतस्वर्णदीनारसंख्याधीनान्संख्याजीविनो हन्त भूपाः ।
अज्ञातान्याराधनाः संश्रयन्तो दृष्ट्वान्योन्यं तत्र दीनास्त्रपन्ते ॥ १९ ॥
स्वस्वानीतस्वर्णसंख्येषु तस्यां संख्यावृत्तिश्वानतिर्या नृपाणाम् ।
बाहाकूटैर्दर्वराभारमुच्चैः शस्त्रद्रोढुं सैष संनाह एव ॥ २० ॥
त्रासं रत्नैस्तत्र शाणेषु घर्षैस्त्यक्त्वा भूपैस्तत्प्रदेशाच्चिरेण ।
तेजो नव्यं प्राप्यते दीपिताशं कामं राज्ञा तत्प्रतिग्राहिणा च ॥ २१ ॥
रेखा हैमीः कापपाषाणसक्ता लोलुप्यन्ते सिक्थकैर्यास्तदर्याः ।
स्वर्णप्रायं प्राभृतं स्वं दिगन्तः स्फूर्तिं धाम्नां मन्वते भूभृतस्ताः ॥ २२ ॥
अस्य क्षीणोनेतुरास्तेऽविचित्ते गाम्भीर्यस्य स्वाधिका गाढतेति ।
द्रष्टुं पाथोरागिना तत्र केचिन्मुक्ता ज्ञात्वा मोचिता रुध्यन्ते ॥ २३ ॥
धार्यैर्नेतुर्हन्त तौल्येऽधिकारो रत्नैरेषां केति रोषात्तदर्याः ।
न्यस्तान्मानेष्वश्मनः किं तुलायां नह्यन्ति द्राक्प्राकृतान्भक्षिकासु ॥२४॥
गोपैः स्वामिद्रव्यगुप्तिप्रशस्तैर्निध्यायासावास्थितां निर्निमेषैः ।
कक्ष्यां संख्याजीविनां कौतुकी तां द्वारं कामप्याप दौवारिकाढ्याम् ॥

आभाति स्वस्वाधिकारानुरूपैर्भूषाभाषावेषपोषैर्युतानाम् ।
सोष्णीषाणां कञ्चुकैः शोभितानां सेवाभाजां स्थानमारभ्य यस्याः ॥
वेत्राघातव्यस्तभूपा विशीर्णैं रत्नैर्नव्यैर्भक्तितो राजलोकाः ।
आतन्वन्तीवेश्वराङ्घ्रिं प्रणन्तुं भूयो यस्यां द्वारपूजां पुरस्तात् ॥ २७ ॥
आसाद्याहंपूर्विकामुग्ररेशैरागच्छद्भिः पूरिता या सदैव ।
प्रायो दातुं चारुतां पार्श्वसीम्नोर्लग्ना रत्नस्वर्णरम्याररा भ्याम् ॥ २८ ॥
द्वारस्तस्या भूपतेर्दर्शनार्थं वेषं योग्यं कल्पयन्वेत्रिवर्गैः ।
अन्तर्नीतः क्रोधरुद्धावनीभृत्संघैः सोऽयं भद्रशालां जगाहे ॥ २९ ॥
नानादेशस्थैर्नृपं नैकरूपैर्नन्तुं प्राप्तैर्या जनौघैर्विभाति ।
लोकेनेव प्रेरितः सेवनार्थं लोकालोकप्रावृतेनात्मसूनुः ॥ ३० ॥
नत्वा राज्ञो निर्यतो नाथमुर्व्या दृष्ट्वा रुद्धा द्वारि दौवारिकौघैः ।
राजानोऽन्ये तत्समा लज्जमाना यस्यां दैन्यं दृग्भिरेवोद्गिरन्ति ॥ ३१ ॥
कृत्ये नेतुर्धावतः क्वापि भृत्यान्द्वारादाज्ञाशक्तिदेहानिवेक्ष्य ।
तत्तद्देशाधीश्वरा यत्र भीत्या स्वस्वानीतिं शङ्कमानाः श्रयन्ते ॥ ३२ ॥
राजन्याली न्यस्तराजन्यचिह्ना भक्त्या यस्या भिद्यते प्राकृतेभ्यः ।
राज्ञे नीतैर्नैकरत्नोपहारैराकारैश्चाशेषभूषाञ्चितेभ्यः ॥ ३३ ॥
द्वारे रुद्धाः केऽपि धात्रीवलारेर्वार्त्तां ज्ञातुं भूमिपास्तत्समीपात् ।
स्वस्वस्निग्धान्निर्यतो यत्र भृत्यान्सद्यो दत्त्वाभीप्सितं प्रश्नयन्ते ॥ ३४ ॥
दूरे नेतुः केऽप्यहो दुर्विदग्धाः स्थित्वा भृत्या भूमिपान्द्वारि कांश्चित् ।
मुग्धान्यस्या वारितान्मोहयन्ते मिथ्योदन्तैर्हर्तुमेभ्यो वसूनि ॥ ३५ ॥
साम्राज्यश्रीविश्वरूपैकशालां चारो दृष्ट्वा तामिमां भद्रशालाम् ।
द्रष्टुं भूयोऽप्यैच्छदाश्चर्यमक्ष्णोर्द्वन्द्वेनेव व्याहरन्विस्तृतेन ॥ ३६ ॥
क्वापि क्षोणीपालगोत्रेषु जातान्राज्ञो वेद्यां तत्र रम्याखिलाङ्गान् ।
यूनः सर्वानेकरूपानपश्यद्योधान्कांश्चित्सैष चारो निषण्णान् ॥ ३७ ॥
अङ्गैः स्फीतैर्नैकशस्त्रश्रमाणामत्युग्राणां शश्वदावर्तनेन ।
भूषाभेदैर्लक्षितानेणनाभीपुण्ड्रैश्चित्रैश्चन्दनस्थासकैश्च ॥ ३८ ॥

हस्ते कृत्वास्तोर्णिगुप्तेऽतिरौद्रं भूयोऽप्यूर्ध्वं शृण्वतः पक्षिनादम् ।
आबिभ्राणांश्चर्मवर्मावृताक्षाञ्श्यैनंपाताशीलिनः श्येनयूनः ॥ ३९ ॥
आज्ञालेखालेखकैरत्र कैश्चिन्नानाभूभृद्दूतनैकार्थनानाम् ।
पात्रैरन्या वेदिमैक्षिष्ट धन्यां बाह्यैः प्राणैः प्राभवस्येव सोऽयम् ॥ ४० ॥
आचन्द्रार्कं भूभृतामन्वयेषु प्राज्यं लेख्यैः प्राभवं कल्पयद्भिः ।
धातारं तु व्यक्तिमात्रे धुनानैर्भूमोजानेरस्य भूम्ना महिम्नाम् ॥ ४१ ॥
राज्ञश्चूडानीलरत्नप्रभाभिः कृत्वा दीप्रां गृह्णतः पत्रलेखाम् ।
नैकद्वीपस्थाननाथत्वमुर्वीनेत्रे विज्ञाप्याशु नित्यं नयद्भिः ॥ ४२ ॥
मुक्तामुक्तैर्यन्त्रमुक्तैरमुक्तैर्मुक्तैः शस्त्रैः पूर्णमुक्तैश्चतुर्धा ।
कोशं प्रान्ते स स्पशः क्वापि योधैरैकाग्र्येण त्राणमैक्षिष्ट हृष्टः ॥ ४३ ॥
वेलावक्त्रा केनचिद्द्वारदेशादभ्येत्याथो भद्रशालान्तरस्थः ।
सोऽयं निन्ये विस्मयस्मेरचक्षुर्लक्ष्मीभूतं मङ्क्षु लक्ष्मीविलासम् ॥ ४४ ॥
बिम्बं पश्यन्रत्नभित्तौ स्वमारादन्यं दानामोदमप्येतदीयम् ।
दन्तो हस्तो दृश्यते यत्र बद्धो बाह्यस्थेमा भूपतेरौपवाह्यः ॥ ४५ ॥
कूटस्थाना दिग्गजा कुञ्जराणा भूमिं पङ्क्त्या धारितां भूरलारेः ।
दोष्णा भर्तुर्धर्वहोऽहं सदेति प्रायो दन्तो यत्र भात्यौपवाह्यः ॥ ४६ ॥
मत्तो यत्रोदारमाणिक्यभित्तिद्योतस्रोतः पुष्कराग्रेण पीत्वा ।
सिञ्चन्नञ्चत्प्रीतिमास्ते करेणुं नागो रागोद्रेकवानौपवाह्यः ॥ ४७ ॥
तूर्यध्वानैर्गर्जितैर्धूपमभ्रं मत्वा नित्यस्थायि मायूरमुख्यैः ।
लास्यं केकागीतिरम्यं विधत्ते च्छेकैः कीरैः श्लाघ्यमानं यदीयैः ॥ ४८ ॥
राजीवानां यत्र रत्नाहितानामंशुस्रोतांस्यासवासारबुद्ध्या ।
स्वैरं पीत्वाप्यात्मतृष्णातिरेकात्तृप्तिर्नास्तीत्येव जानन्ति भृङ्गाः ॥ ४९ ॥
घासाङ्कुरानश्मगर्भस्थलांशून्भ्रान्त्वा लीलामेणपङ्क्तिं हसित्वा ।
यस्मिन्कीरा वासयष्टिभ्रमेण स्वर्णद्योतानापतन्तस्त्रपन्ते ॥ ५० ॥
बिम्बं यस्य स्वर्णभित्तिष्वपेक्ष्य प्राप्तुं सर्वत्रापि पाणिं प्रसार्य ।
एषा संसन्नेतुरेवेति राज्ञः शौकान्यग्रे संदिहानान्हसन्ति ॥ ५१ ॥

रुद्राध्यायान्नित्यरुद्रार्चनोक्तानुच्चैः कीराः पञ्जरेषूद्गृणन्तः ।
भूभृद्दानादानपात्राणि यस्मिन्भूमीदेवान्सर्व एवाक्षिपन्ति ॥ ५२ ॥

संक्रान्तात्मा यत्र सत्रा भवान्या रत्नस्तम्भेष्वेधते राजचूडः ।
भूयस्त्वेन प्रौढपूजाविधीनां कायव्यूहं कल्पयन्कौतुकीव ॥ ५३ ॥

भूत्वा भूमिं रक्षतो भूवलारेः साम्यं लब्धुं भूभृता शार्ङ्गपाणिः ।
लोकं रक्षन्मत्स्यरूपेण यस्मिन्नास्ते शेषेणानिशं चित्रितात्मा ॥ ५४ ॥

धृत्वा रक्षन्यत्र दोष्णा धरित्रीं स्थैर्यं लक्ष्म्याः स्थापयत्येष भूपः ।
इत्येवाहिं तल्पयन्निन्दिरायां सक्तः शार्ङ्गी चित्रितः साधु शेते ॥५५॥

राज्याङ्गश्रीवृद्धये राजतुल्यव्याहारैर्भूनिर्जरव्रातजप्यैः ।
जातेनोच्चैर्यः प्रतिध्वानभूम्ना हर्षेणैतान्सम्यगभ्यस्यतीव ॥ ५६ ॥

सौवर्णीभिर्भित्तिभिः शोभितो यो वज्रस्तम्भैर्वासवाश्मस्थलैश्च ।
किम्मीराभैर्नैकभेदप्रसूनस्रग्गन्धानां संगतानीव धत्ते ॥ ५७ ॥

रत्नैर्नानाजातिभिर्यन्निबद्धा रम्या भूपैर्यत्र सोपानपङ्क्तिः ।
आरोहद्भिः पर्वणामाशु भेदा गण्यन्ते तद्भिन्नकान्ति श्रितानाम् ॥ ५८ ॥

आस्ते नेतासाविहेति क्षितीन्द्रोरानभ्याचों नूतना यत्र भूपाः ।
ऊरीकारव्यञ्जकोत्केरभावाद्विज्ञायार्चेत्यात्मना विस्मयन्ते ॥ ५९ ॥

रत्नोत्कीर्णे तत्र लक्ष्मीविलासे प्रीतोऽपश्यद्भद्रपीठे निषण्णम् ।
तेजोभिः स क्ष्मापतिं दीपिताशैः सान्द्रं शृङ्गे रत्नसानोरिवार्कम् ॥ ६० ॥

सद्यैरक्ष्णोरंशुभिः सान्द्रमर्कं रम्यं चन्द्रं राजता लक्षणेन ।
वाक्यैर्युक्तं भोगिवर्यं सुधार्द्रैः प्रेक्ष्येणाङ्गेनोज्ज्वलं पुष्पबाणम् ॥ ६१ ॥

गम्भीरत्वेऽप्याशयस्यार्यलोकैः कामं राशिं पाथसां प्राप्यमन्यम् ।
अन्यं मेरुं स्वात्मनो धीरतायामप्यंहःसु प्रत्यहं कातरं च ॥ ६२ ॥

पूर्णादभ्रेरात्मदानाम्बुधारापूरेणाभ्रे वारि संगृह्य वृष्टे ।
भूमौ सर्वत्रापि भूपाः समेयद्दातारस्तद्दानकेल्यामतुल्यम् ॥ ६३ ॥

धृत्वा चित्ते साधु दृष्टिद्वयान्यां देवीं सिन्धुं वाचि वक्त्रे कलां च ।
तौल्यं शंभोर्दर्शयन्तं स्वशक्त्याप्याबिभ्राणं पौरुषं पूर्णमेव ॥ ६४ ॥

आरक्ष्याशाः स्वालयारक्षमासामेकैकस्यास्तानधीशान्निजांशान् ।
आधत्तेऽसाविन्यमीषां गुणौघैः प्रोत्या भव्यैराश्रितं भिन्नभिन्नैः ॥ ६५ ॥
स्वैरं द्वीपानाहृतान्स्वैरनर्घान्रत्नस्तोमान्भित्तिरत्नैरसंख्यैः ।
प्रत्यस्ताशान्वीक्ष्य मग्नान्दयार्द्रैः पश्यन्तं दृग्विभ्रमैः पारसीकान् ॥ ६६ ॥
श्राव्यैर्दृश्यैः संभृतस्वापदानैः काव्यैः स्तोतॄन्सत्कवीन्काङ्क्षितानि ।
दत्त्वा भूयोऽप्यात्मदातृत्वभूम्ना प्रेम्णा दानात्प्रागिव प्रेक्षमाणम् ॥ ६७ ॥
श्लोकैर्नैकैः सत्कवीनां स्तुतानि श्रुत्वा संघैस्त्यागशौर्यार्जवानि ।
कुर्वाणं स्वं रत्नकोटीरमग्रे सद्यो हारश्रेणिसक्तानुबिम्बम् ॥ ६८ ॥
चारः स्वस्वाधीशचर्यां कथं वा वक्तेत्यन्तस्त्रासिनो वैकृतेन ।
उत्प्रेक्ष्यारात्तत्तदुर्वीपतीनां कार्याध्यक्षान्कानपि प्रेक्षमाणम् ॥ ६९ ॥
विज्ञाय नैकधरणीविभुचेष्टितानि वक्तुं समागतममुं वसुधासुधांशुः ।
आलोक्य चारमयमाह पुरो निषण्णं गोविन्दयज्वतिलकं गुणिनां प्रवेकम् ॥
प्रहितस्त्वया प्रणिधिरेष रयादवबुध्य तत्तदहिताचरणम् ।
पुनरागमन्मम पुरस्तदमुं परिपृच्छ वाग्घि पटुमच्छमतिम् ॥ ७१ ॥
वाचमिमाममुनावनिवलमथनस्यावतंसस्य सचिवेन ।
दशनविभाभिर्जगदे दशदिशि दिवसेऽपि चन्द्रिकां सृजता ॥ ७२ ॥
अपिधाय पटाञ्चलाञ्चिताभ्यां स विनीतो वदनं चरः कराभ्याम् ।
अगदीद् द्विषतामथापदानान्यनुयुक्तो मखिनामधीश्वरेण ॥ ७३ ॥
स्वामिद्रोही जगराजः स्वमित्रैः कैश्चिद्भूपैः प्राप्य कर्णाटभूपम् ।
सेवाव्याजेनाशु सेनासनाथः सुप्तं रात्रौ सोऽवधीद्दुन्दुभुत्रैः ॥ ७४ ॥

स मित्रसुतबान्धवैः सह निहत्य कर्णाटक-
प्रभुं स्वकुलपोषकं प्रबलपापदुष्यन्मतिः ।
ततोऽनु सहितो नृपैर्द्रमिडचेरपाण्ड्यादिभि-
र्भ्रमत्यनुचितक्रियापरवशोऽधिरङ्गस्थलम् ॥ ७५ ॥

हतेऽथ कर्णाटनृपे सहात्मजैस्ततोऽवशिष्टं पृथुकं तदात्मजम् ।
कम्प्युपायादपहृत्य यत्नतः कथंचिदायाति स याचभूपतिः ॥ ७६ ॥

आलम्ब्य मङ्क्षु धरणीन्द्र महानुभावमागन्तुकैकशरणं प्रबलं बलेन ।
याचक्षमापतिरसाविह याचति त्वां सख्यं जितो रिपुनृपैः स्वविभुत्वहेतुम् ॥
कर्णाटप्रभुसूनुमात्मनिमतं कंचिद्गृहीत्वा शिशुं
त्वामभ्यागमदेष याचमहिपस्तूर्णं भियेत्यन्वहम् ।
पाण्डयश्चेरसखोऽथ जगदभिमुना पापेन च प्रेरितः
कावेरीतटधर्मसेतुमचलं कैश्चिन्क्रुधाभेदयत् ॥ ७८ ॥
इत्याख्यातं प्रणिधेरेष वाक्यं सत्यालापः प्रतिघेनाश्रकर्ण्य ।
स्तुत्यप्रज्ञो रघुनाथावनीन्द्रः प्रत्यज्ञासीत प्रबलस्तत्क्षणेन ॥ ७९ ॥
गत्वा संप्रति कुम्भघोणमुचितं कर्णाटनेतुः सुतं
बालं तं शरणागतं विरचये पट्टाभिषिक्तं बलात् ।
प्रौढश्रीरधिभद्रपीठि निवसन्पाथोधिभिः प्रावृतां
सर्वामिप्यवनिं स राममहिपः स्वैरं चिरं रक्षतु ॥ ८० ॥
अन्तरोपगतमम्बुधेरहं चोलकं सपदि चोदितैर्नृपैः ।
कैश्चिदेव युधि खण्डये पुरा बन्धुपुत्रसहितं प्रतापतः ॥ ८१ ॥
पाण्डयं तुण्डीरचेरद्रमिडमगधभूपालमुख्यैः सपत्नै-
र्हस्तग्राहं गृहीत्वा सपदि समिति तत्तत्समस्तार्थजातम् ।
योधैराहार्य शूरैः पटगृहमखिलं योजयित्वा च वह्नि-
ज्वालाभिर्भासयेऽहं दिशि दिशि सततं जैत्रवृत्तिर्महांसि ॥ ८२ ॥
छिन्नैर्जग्गनृपादिबाहुजनुषां सेतुं शिरःकर्परैः
कावेर्यां युधि बन्धयामि सुदृढं कामं तथाहं भटैः ।
स्पष्टं तैर्विधृताभिरेव लिपिभिः स्वायंभुवीभिर्यथा
कर्तव्यं जयरेखिकाविरचनं कल्प्येत कल्पावधि ॥ ८३ ॥
इतीरयन्वचनमिलावलाहितो धराधुरां निजसचिवे निवेश्य च ।
स रोहितास्सदसि सरोषमीक्षणादनीकिनीमथ समनीनहत्क्षणात् ॥ ८४ ॥
अखण्डकाण्डीरमनन्तकौन्तिकं प्रगल्भयाष्टीकमनल्पधन्विकम् ।
प्रमत्तशाक्तीकमभूद्बलं प्रभोरपारपारश्वधिकं भयानकम् ॥ ८५ ॥

स्कन्धेषु विस्तृतकुथेषु करिव्रजानामध्यास्य साधु घटितानथ लोहमञ्चान्।
संचारिनीलगिरिदुर्गगता इवाराद।धोरणा विबभुरङ्कुशगर्भहस्ताः ॥ ८६ ॥

शिरस्त्रिणः कनकसिरालकञ्चुकाश्रकागिरे पथि पथि शार्ङ्गपाणयः।
तुरंगमान्स्यदचतुरं गमागमेष्वधिष्ठिता युधि विदितान्निषादिनः ॥ ८७ ॥

क्रमेण केचन विदधुः क्रमेल्कैष्वरिथतं द्रुतमुरु मञ्चमास्थिताः।
स्ववस्तुभिः पथिकजनोचितैः समं जयानकं विमतभयानकं भटाः॥

व्यजृम्भत ससंभ्रमं युगविवर्तनृत्तत्वरा-
पुराहितकरस्फुरड्डमरुडंक्रियाडम्बरम्।
समं विमतभैरवैः समरशंसि शङ्खारवैः
प्रयाणपटहध्वनिः प्रसममम्बराशाध्वनि ॥ ८९ ॥

कुलस्थितिभृतां कुलं सकलमाकुलं व्यातनो-
त्समुच्चलितसिन्धुभिः पटुरवैस्तदा दुन्दुभिः।
निजाधिपभुजाधिकप्रसृतविक्रमन्यक्कृत-
द्विषत्परिषदास्पदार्पणसमुन्मिषद्रोपतः ॥ ९० ॥

भाङ्कारेण घनेन जातविवरं ब्रह्माण्डभाण्डोदरं
मेरो मङ्क्षु बिभेद कोणनिहता युद्धोद्धटैस्तद्धटैः।
सौवक्ष्मामतिधैर्यशौर्यविनयौदार्यस्वभावार्जिता
कीर्तिर्व्यापिजगत्त्रया किममुना रुद्धेति कोपोद्धता ॥ ९१ ॥

द्वीपं स्फूर्जथुनर्मबन्धुभिरथाद्वाविसन्धुभिर्दुन्दुभिः
संभ्रान्तं विजयप्रयाणसमये संभावितैर्भाङ्कृतैः।
प्रागेव स्वविभोः प्रतापविभवाद्बाधा विधास्येतरां
शत्रूणामहमेव तत्र वसतामित्युद्धतः कोपतः ॥ ९२ ॥

कल्पान्तानल्पजल्पत्तरमुदिरसुहृज्जैत्रयात्राभिधायी
भेरीध्वानस्तदानीं बलिनिलयबिलाध्वानमद्धा निरोद्धा।
बाधिर्यापादधुर्योऽप्यखिलतनुभृतां कर्णरन्ध्रानुबन्धी
चक्षुःश्रोत्राधिनेत्रा भयमुकुलदृशा चक्षमे तत्क्षणेन ॥ ९३ ॥

पाथोनिधिं बलरजोभरलुप्तमर्कं शस्त्राभिघातहतशत्रुविदारितं च ।
आवासमाद्यमुपकल्प्य तथापि गौरेगत्रासयन्हृदयमोदितसाधुलोकैः

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ९५ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहिती-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
काव्येऽपूरयत त्रयोदशममुं सर्गं मखिग्रामणी-
रत्नाकद्भुदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ९६ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
त्रयोदशः सर्गः ।

---

# चतुर्दशः सर्गः ।

प्रत्यर्थिप्रभुविजयप्रयाणयोग्यं संनद्धे महति बले स भूषणानि ।
आमृत्य प्रकृतिमनोहरैस्तथाङ्गैराकाङ्क्षीन्महिपरिणीरनुग्रहीतुम् ॥ १ ॥
काश्मीरद्रवमृगनाभिगन्धसारप्रालेयप्रभृति विलेपनं भरन्त्यः ।
आदर्शं कनकमयाम्बरं स्रजं च क्ष्मापाकाहितमभजन्क्षणेन कान्ताः ॥ २ ॥
स्थालेषु द्रुतकनकोज्ज्वलेषु जालं प्रक्षिप्य क्षितिपमणेः परिष्क्रियाणाम् ।
कोटीराङ्गदपलकादि कोमलाङ्गयः प्रह्वा द्रुतमपराश्च पर्यवृण्वन् ॥ ३ ॥
स्थाले काचन मणिभूषणं दधाना द्रष्टुं भूपतिमपटुत्रपावशेन ।
आनम्राननममुमोक्षते स्म सम्यग्भूपाञ्चत्तमणिपोपितानुबिम्बम् ॥ ४ ॥
कान्तानां शशिविशदेऽमुष्यौ कपोलेऽप्याकारं निजमवलोकयन्नथापि ।
आदर्शं क्षितिरतिजानिरन्यगृह्णादालोकैर्भृत इति किं प्रियाजनेन ॥ ५ ॥
वक्षोऽस्थलविधृते वसुंधरेन्द्रं कस्याश्चित्प्रतिफलितं घनात्मदर्शे ।
आद्राक्षीदधिगतवक्षसं विदित्वा सासूयं प्रियमबलाजनस्तदन्यः ॥ ६ ॥
अस्य क्ष्माकमितुरनर्हितसाम्यमङ्गं सैषाग्रे मुकुरगतं स्वयं विधाय ।
आधत्ते कथमयितोपमानमद्येत्यन्यास्तां मुकुरकरामहो निनिन्दुः ॥ ७ ॥
आदर्शे प्रतिफलितं हृतामृतांशुप्रासव्यं वदनममुष्य भासते स्म ।
बाह्यं तद्रुचिविभवं बलेन हृत्वा कोपेन द्रुतमिव गाहमानमन्तः ॥ ८ ॥
चूडायां ग्रथितममुष्य सूनमाल्यं शोभामाधित वसुधासुधाकरस्य ।
देवस्य स्मितजितविद्विषत्पुरस्य त्रिस्रोतःसरिदिव शेखरीभवन्ति ॥ ९ ॥
स्वच्छन्दोज्ज्वलकविता सुवैकभूषाभव्यस्यानिशमवनीपतेर्मुखस्य ।
संघातं यश इव वज्रसंघदीप्रं कोटीरं शिरसि धृतं किमप्यराजीत् ॥ १० ॥
पद्मारिं क्षयभरितं नभोगमिन्दुं संत्यज्याखिलगुणसान्द्रमुर्वरेन्दुम् ।
ताराणामनुमुचितं समाश्रितानां मोहं व्यातनिपत मौलिमौक्तिकानि ॥ ११ ॥
नासायै कनकसुमाय नर्महेतोः कश्येन भ्रमरगणेन चोदितस्य ।
दृतस्य व्यरचयत द्युतिं धरित्रीशीतांशोर्मृगमदचित्रकं ललाटे ॥ १२ ॥

भूपा यद्वजनभुग्नो भुवो वलारेरङ्गाना मणिखचिताः किलाखिलानाम् ।
सैव श्रीः श्रयति सदावयोरपाङ्गौ हृष्टेति लसत इव स्म चक्षुषी ताः ॥

राजेन्दोः श्रुतिधृतरत्नकर्णिकाभ्यां कान्तादप्ययति न किं कपोलयुग्मात् ।
चारुत्वं सततमनन्यसाधितं मामित्युच्चैः स्मयभरितेव नासिकाग्रात् ॥ १४ ॥

श्रोत्रे सुश्रुतबहुलश्रुतैकभूषे तस्यालंकृतिरुचिरे तथाप्यभूताम् ।
कर्तुं स्वान्तिकगतगल्लकाभिरूप्यं कोऽप्येवं जयति गुणो बहुश्रुतानाम् ॥

मुक्तानां मुखविधुमुग्धचन्द्रिकाभिः शोभाभिः स्म वहति कर्णिके स्फुरन्त्यौ ।
भूपालः पुनविजयोर नाद्यगिङ्गुस्वर्गङ्गास्तुतियुगलौ कपोलसक्ताम ॥

सर्वाण्यप्यवनिपतिं समेत्य भूपावृत्तीनि प्रकटमयन्ति विश्रुतत्वम ।
रत्नानीत्यधरतया रदश्रियेव स्थित्वा विश्रुतमहसस्स्वयं प्रवाल्य ॥ १७ ॥

काश्मीरद्रवकलिताङ्गराग एष क्ष्मापालो धृतमृदुकञ्चुको व्यलासीत् ।
ईशानश्वशुर इवात्तरक्तधातुः प्रालेयैर्वनिधरः परीतमूर्तिः ॥ १८ ॥

गाङ्गेयाकलितमयं कटिप्रदेशे वासः स क्षितितलवासवो वसानः ।
स्वर्णाद्रिः सविधचरस्य चित्रभानोः संवीतः किरणचयैरिव व्यराजीत ॥

वज्रान्तःश्रितयुवतिव्रजानुबिम्बं बिभ्राणः पतङ्गमसौ विशामधीशः ।
साधर्म्यं वहति पुरा सरोजनाभेर्वक्षोभूधृतवनजालयागतस्य ॥ २० ॥

चाञ्चल्यं गुणमजहात्स्वमात्मकन्या वक्षो भूतलवल्लजेतुराश्रितेति ।
मुक्तास्तज्जलनिधिना मुदा नियुक्ता हारत्वं दधुरनिशं दिदृक्षमाणाः ॥ २१ ॥

मन्थक्ष्माधरमथनार्भटोसमुद्यत्क्षीराम्भोनिधिपरिकीर्णबिन्दुभाजः ।
दैत्यारेरवनितलक्षपाकरोऽसौ हाराणां निकरमसस्मरद्दधानः ॥ २२ ॥

माणिक्यप्रकरमहःप्रदीपिताशं केयूरं क्षितिनवमीनकेतुराधात् ।
प्रत्यर्थिक्षितिपजयप्रसङ्गहर्षाद्बाहाया बहिरिव निःसृतं प्रतापम् ॥ २३ ॥

क्ष्मापालो मणिघटितस्य कङ्कणस्य व्याजेन स्वकमणिबन्धकल्पितस्य ।
कर्तव्यं प्रतिसरबन्धकर्म पूर्वं व्यातानीद्विजयरमाविवाहहेतोः ॥ २४ ॥

श्रीरामाक्षरजपशीलनाय पाणिभ्यासक्ता व्यतपन मौक्तिकाक्षमाला ।
संदर्भक्रम इव संश्रितः शरण्यं क्षोणीन्द्रं कुकविकुलेन बाध्यमानः ॥ २५ ॥

पादस्थं मणिकटकं प्रभोः प्रजानामौपम्यं परमुचितं तदा भजेत ।
उत्क्षिप्ते बलिमदहन्तुरूर्ध्वमङ्घ्रौ लग्नं चेन्नखकृतरन्ध्रमर्कबिम्बम् ॥ २६ ॥

भूषाभिर्यतयत भूपितो नृपालः संक्रान्तप्रतिफलनस्तदात्मदर्शे ।
सस्नेहं बहिरुपलिप्तभूतिशुद्धे चण्डीशो मनसि यथा तपोधनानाम् ॥ २७ ॥

आदर्शे प्रतिकृतिमास्थितस्तदानीमौपम्यं समुचितमुर्वरावलारिः ।
स्फूर्जन्त्या महति सुदर्शनस्य मध्ये कंसारेरभजदसौ कयापि मूर्त्या ॥

प्रेयस्यः प्रमदमधुः प्रियेण दृष्टाः पौरस्त्याः प्रतिघमवस्थितास्तु पश्चात् ।
आदर्शप्रतिफलनात्तदागतज्ञो व्याहारैरथ मुदिताः स ता व्यतानीत् ॥

भूषाभिः सादि विभूषितप्रतीकः शुद्धान्ते निजमुमुखीजनान्प्रवेश्य ।
प्राणंसीदथ विजयप्रयाणकाङ्क्षी वैदेहीपतिमवनीवलप्रमाथी ॥ ३० ॥

साष्टाङ्गं स्वकुलधनं प्रणम्य सम्यग्व्याहारैर्विजितसुधाङ्गगीविहारैः ।
कोटीराञ्चलघटिताञ्जलो रघूणामस्तौष्ट प्रभुमिति भूपतिः प्रहृष्टः ॥ ३१ ॥

क्ष्मानम्रंकरणमुनीन्द्रसोदरेषो पश्याङ्घ्रिश्वशुरपदाब्जरेणुलेश ।
स्वोपायार्जितधरणीसुरत्वमौनिप्रक्रान्ताध्वरपरिरक्षणप्रवीण ॥ ३२ ॥

तुभ्यं हरप्रहरणदुर्धराशुगासस्थेमैकावधिविबुध देवसार्वभौम ।
भूयासो रघुकुलभूषण प्रणामा भूयासुर्द्रुहिणपुरंदरादिवन्द्य ॥ ३३ ॥

द्वीपस्थं रघुतिलक द्विषं मथित्वा तस्याहं पुरि कलये तव प्रतिष्ठाम् ।
साहाय्यं युधि मम संविधेहि तत्रेत्यभ्यर्थ्य क्षितिभृदतः प्रतिश्रुते स्म ॥

सम्राजामथ रघुनाथसार्वभौमः संवेन द्विपमभियोगपन्पुरायम ।
आस्थानीभुवि समभ्यर्चितोपचारान्स्वसाहीन्विरचयता सहादरेण ॥ ३५ ॥

भूपालैरुपरि भृतैः स खेटकौघैः सौवर्णैरवनिभृतकतुः परीतः ।
अस्मत्तो भुवमयितो मधुप्रमाथील्यर्कैर्द्वादशभिरिवाश्रितो व्यलासीत् ॥

गाङ्गेयं कटिभुवि कल्पयन्कराङ्गं बाहायां वदनमजापटीं च तस्य ।
कश्चिद्भूभृदथ करप्रसारवेलां विज्ञाय स्म दिशति वीटिकादलानि ॥ ३७ ॥

पादाग्रे व्यतपत वज्रपादुकायाः क्ष्माभर्तुर्द्युतिरपरेण कल्पितायाः ।
अश्नन्त्याः पदकमलासवचमुद्रां गङ्गायाः स्तुतिरिव कंसहिंसकस्य ॥

अन्याभ्यां विभुमभितः प्रकीर्णके द्वे व्याधूते विमलतरे चयिरोपातम्।
बाहुभ्यामिव यशसो प्रतापवद्भ्यां संजाते त्रिभुवनचङ्क्रमाय लोले ॥३९॥
क्ष्मापालस्तदनु करं स पञ्चशाखे नेपालक्षितिपरिणेतुरादधानः ।
उद्वेलान्निपतितमुद्भवन्नलक्ष्मीपर्यायादिव तटिनीपतेरराजीत् ॥ ४० ॥
आभूमिप्रसृमरकञ्चुकाग्रधारिस्वाभ्याशापतदवनम्रसार्वभौमः ।
भूपोऽग्रे चलितपुरोहितद्वयीकः कक्ष्याः काश्चन समलङ्घत क्रमेण ॥४१॥
पृच्छन्तः प्रतिपुरुषं पृथक्पृथक्क्ष्मापाकारेरवसरसुर्वरापरिण्यः ।
व्याहारं मगधगणस्य बाह्यकक्ष्यावेदीषु श्रुतिविषयं व्यधुर्निषण्णाः ॥
शुद्धान्तादयमवनीसुधांशुरागदायातीत्यथ मगधोक्तिभिर्विदन्तः ।
बाह्यालीभुवमवरुह्य वेदिकाभ्यः संमर्दक्षममवतस्थिरे नरेन्द्राः ॥ ४३ ॥
अन्योन्यव्यतिहतिशीर्णभूपभूषाधूलीभिर्द्विरदमदैश्च पङ्किलायाम् ।
बाह्यालीभुवि पतिताः स्म हारमुक्ता भासन्ते किल यशसा नवप्ररोहाः ॥
प्रस्थानं विदधति पार्थिवे तदानीं कुर्वाणा स्वपरिजनान्कुहापि भीत्या ।
आदाय द्रुततरमायुधानि तेभ्यः सम्राजामबिभृत संसदं ससीम्नि ॥ ४५ ॥
आक्रान्तेऽवलमथ वेत्रिभिः प्रहारं तन्वानैरपकरुणं तदा नृपेषु ।
बाह्यालीभुवमभिता श्रिता पाताकिन्यातानीद्द्रुतमधिकं गतागतानि ॥
गन्धेभागमनरलक्रमेलकौघक्रोङ्कारैरुपरि पतत्सु घोटकेषु ।
श्लिष्यन्त्यो भयचलिताश्चिरेण योधान्संतुष्टान्व्यदधत वारसारमाक्ष्यः ॥
आयाति क्षितिभृदयं विवर्तनीयो गन्धेभो मदकरटी निवर्त्यतां द्राक् ।
पन्थानं स तु निरुणद्धि पत्तिराराद्भ्येतीत्यजनि तदा निषादिघोषः ॥
संनद्धा भवत समुल्लुलन्नभीक्ष्णं घोटीनां निकटमुपैति घोटझाटः ।
पादानं भुवि पतितं भवेत्तदेनं गृह्णीतेत्यभिदधिरे गिरं हयस्थाः ॥४९॥
संमर्दादभिपततः खमाक्षिपन्तो दोषाभे यवनभटा दृशौ दधानाः ।
अश्नन्तः प्रतिमुहुरादधुः कलञ्जं दुर्वृत्ताः करकरवालधूननानि ॥ ५० ॥
बिभ्राणैर्वरिवसितः स भृत्यमुद्रां भूपालैरथ रघुनाथभूविडौजाः ।
बाह्यालीभुवमकरोत्पदारविन्दद्वन्द्वेनोपरिकलितेन धन्यधन्याम् ॥५१॥

भेरीणां मदकरिणां भटोत्तमानामश्वानामपि समभावि भाङ्क्रियाभिः ।
फीत्कारैर्निजबिरुदोक्तिभिस्तदानीं हेषाभिश्च युगपदेकतां प्रपन्नैः ॥५२॥
क्ष्माजानेः स्तुतिपठितानि मागधानां भेरीभाङ्कृतिबधिरीकृतश्रवोभिः ।
भूपालैरनुमिमिरे भुजप्रसारासाराभ्यामधरदलैश्चलाचलैश्च ॥ ५३ ॥
तत्तद्भूपतिजनुपस्तदा जनानामासन्नान्यिनयजुषोऽथ नायकाय ।
नामानि त्वरितमुदीर्य नैकशानि व्यक्तानारचयत वेत्रिणां समूहः ॥५४॥
विज्ञप्तो विभुरवनेः स वेत्रिणीभिरालोकैस्तदनु कृतार्थतामनैषीत् ।
गाङ्गेयत्सरुकरवालगर्भमारात्कुर्वाणं नृपकुलमञ्जलिं किरीटे ॥ ५५ ॥
व्याहारैः कतिचन मन्दहासतोऽन्या-
न्व्यापारैरपि नयनाञ्चलस्य कांश्चित् ।
सम्राजां स तु समभावयद्यथार्हं
संदोहानथ रघुनाथसार्वभौमः ॥ ५६ ॥
आद्यन्ताञ्चलनवरत्नमपट्टयुग्मव्यानद्धोचितनतमध्यवेणुदण्डाम् ।
वोढारः कनकमयीं वसुंधरायाः शौताशोर्नवशिबिकामकार्षुरग्रे ॥ ५७ ॥
पर्याणं कनकमृगाधिपालरूपं बिभ्राणं नरपतिविक्रमानुरूपम ।
सादी तन्निकटमुवं शनैरनैषीदाश्चर्यावहनिजचर्यमश्ववर्यम ॥ ५८ ॥
कोऽप्युद्यत्करटकटाहदानतोयैः प्रस्विन्नं गिरिमिव निर्झरप्रवाहैः ।
अभ्यर्णं तदनु करमप्यनेकपानामानैष्ट प्रवरमनुत्य भूमिजानेः ॥ ५९ ॥
भूमंज्ञां द्रुतमवधाय भूसुधांशोराहत्य प्रतिमुहुरङ्कुशेन यन्ता ।
आभुग्नाग्रिमचरणाग्रमल्पनम्रग्रीवाकं गजमधिताधिरोहयोग्यम् ॥ ६० ॥
मातङ्गं विनतमसौ महीपतीनामध्यक्षः शिखरिसदृक्षमध्यरुक्षत ।
आरूढावपुमपरौ च भूमिपालौ पश्चाद्वौ करधृतचोटिकाप्रकीर्णौ ॥ ६१ ॥
विज्ञायाशयमवलोकनेन राज्ञो विज्ञास्ते विनयभृतो विशामधीशाः ।
आरूढा निजनिजमौपवाह्यमेतं पर्यन्तक्षितिमधिगम्य पर्यवृण्वन् ॥ ६२ ॥
आहन्यादयमहितान्नृपानमीषु प्राप्ताः किं स्वकुलभवा न वेत्यवेतुम् ।
आयातं शशिनमिवावनीवलारेरग्रे कोऽप्यबिभृत शुभ्रमातपत्रम् ॥ ६३ ॥

बिभ्राणाः कुलबिरुदोभवन्ति राज्ञः कोऽप्यग्रे मकरमयानि केतनानि ।
सौन्दर्यादपरिमिताङ्गभूसमष्टिं तं व्यक्तं किमु समसूचयञ्जनाय ॥ ६४ ॥

उत्क्षिप्ते स्फुटमुदितानुबिम्बदम्भात्सौवर्णे धरणिगचोपतैर्विचित्रे ।
विद्वज्ज्यैः प्रतिमुहुरात्मबिम्बभेदाद्भीतो भूतलमभजत्प्रियो नलिन्याः ॥६५॥

दिवाप्रदीपैर्नरदेवमेनं निषेवितारो निकषा व्यराजन् ।
त्वज्जैत्रयात्रासमयेऽभियानीनोदक्रप्रतापा इति सूचयन्तः ॥ ६६ ॥

स्कन्धावबद्धगुणसक्तपदाहतेन दन्ताञ्चलाञ्चितधरातलमाननम्य ।
गन्धद्विपान्युगपदङ्कुशगर्भमेनमाधोरणा विरचिताञ्जलयः प्रणेमुः ॥ ६७ ॥

आधूतखड्गतिलका मुहुरानतानि कृत्वा शिरांसि परिकूतगभीरघोषम् ।
दूरादकुर्वत तुरुष्कभटा धरित्रीपाकद्विषः सविनयं प्रणतिं हयस्थाः ॥

राज्ञामादधदथ तस्य नेतुराज्ञामुत्तंसस्रजमिव तूर्णमुत्तमाङ्गे ।
कल्पान्तप्रसृमरसिन्धुबन्धुकल्पा सेनानीश्चतुरमनीकिनीमतानीत् ॥ ६९ ॥

सैन्यैस्तस्य जनेश्वरस्य चलितैः शौर्योन्महोमण्डलं
संभ्रान्ते सकले कुलाचलकुले संत्रस्यतामारवान् ।
सिंहानामवकर्ण्य सिन्धुरगणे दिश्ये द्रुते भ्रश्यता
भूभारेण निमग्नमस्तकमणिर्भग्नः फणीशोऽभवत् ॥ ७० ॥

संवीभूतमनुक्रमेण सदनद्वारावकाशोचितं
बाह्यालीस्थलतो वलक्षितिवलप्रद्वेपिणस्तद्बलम् ।
साधर्म्यं बिभरांबभूव सरितामीशस्य कल्पक्षया-
नल्पक्षोभविभिन्नसेतुसरणीनिःसारिणा वारिणा ॥ ७१ ॥

विदधति रघुनाथक्षोणिवृत्राभियानी
विमतविजययात्रां वीरलोकाग्रगण्ये ।
अनुगृहमदसीयालोकलोलागयानां
कुवलयनयनानां कोऽपि कोलाहलोऽभूत् ॥ ७२ ॥

धरापाकारार्तिं तदनु तनुमध्याः कलयितुं
वितन्वत्यः सौधान्निघटितगवाक्षान्तरपुटान् ।
आनाना व्याचक्रुर्जनितकुतुकान्वीक्षितुममुं
समुन्मीलन्नेत्रान्निमतजययात्रां विदधतम् ॥ ७३ ॥

अश्रुप्रनैकविधकाव्यरसानसोद दिक्षुद्रवामृतझरीघनमाधुरीक ।
संतानविस्मयविधायकनित्यदानसंतानपोषितसमस्तबुधप्रवेक ॥ ७४ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदानसंधे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ७५ ॥

श्रीगोविन्दमखीन्दुवंशमणिना श्रीयज्ञनारायणा-
भिख्येनाध्वरिणा कृते मधुसुधारोधाय मेधाविनाम् ।
काव्येऽपूरि मितश्चतुर्दशतया सर्गो निसर्गोज्ज्वल-
स्तत्राकद्रुदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ७६ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्यातवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
चतुर्दशः सर्गः ।

## पञ्चदशः सर्गः ।

प्रचलिता तदनु प्रति वीथिकां पटुरटत्पटहोदितचङ्क्रमा ।
प्रवहदम्बुनिधिप्रभवश्रियं समवनोदवनोभृदनोकिनो ॥ १ ॥

स्थलरथाः किल यत्र समुन्नताः प्रतिपदं रचिताः प्रचकाशिरे ।
नगरदेवतया न कथं धृता बहुविधं फलिताः स्वमनोरथाः ॥ २ ॥

स्थलरथाः स्वकुटुङ्कतटोलगन्मुकुरपङ्क्तिनिभेन मुहुर्मुहुः ।
अनिमिषेण किमक्षिशतेन यान्निरवधिप्रमदं निरवर्णयन् ॥ ३ ॥

जयकृते चरतोऽस्य धरापतेः समुचितं किल यत्र धरा प्रिया ।
विरचिता रुरुचे विरजस्तया प्रतिमुहुर्मिहिकाभरसेकतः ॥ ४ ॥

त्रिशिखया विरजीकृतया जनैः पुनरभूयत भूरिपरागया ।
मम सुमैरिति यां मधुधारया प्रसवतोरणपङ्क्तिरसिञ्चत ॥ ५ ॥

प्रसवतोरणदामभृतासवप्रसनकर्मगतव्यसनानलीन् ।
कनकसौधघटा किनु विद्रुतान्व्यधित यत्र चलध्वजपाणिभिः ॥ ६ ॥

इभगणैरभिषङ्गमिदं भजेत्कुवलतोरणमित्यकुतोहतम् ।
यदभितः स्थितसौधगताः स्त्रियः स्वनयनांशुभिरेव तदा दधुः ॥ ७

कदलिका गणिकाजनमन्दिरप्रघणसीम्नि गताः प्रचकाशिरे ।
क्षितिभुजे किमु यत्र समेष्यते भणितुमूरुभिरात्मविभाहृतिम् ॥ ८ ॥

उभयपार्श्वगृहोपरिजालकश्रितवधूवदनाम्बुजदम्भतः ।
मुखसहस्रमधारि मुदैव यां नगरदेवतया न किमीक्षितुम् ॥ ९ ॥

अधियदीयशिरोगृहमञ्जलिप्रचुरलाजभृतो गणिकाङ्गनाः ।
विजयलक्ष्मिविवाहकृते विभोर्हविरिवोचितमादधतो बभुः ॥ १० ॥

रतिपतौ रघुनाथजनाधिपं श्रयितुमात्मपरार्धसमद्युतिम् ।
यदभितःस्थितयौवतसैनिकैः सममधिज्यधनुः समनह्यत ॥ ११ ॥

कनकभाजनकल्पितदीपिकाश्रितकरः किल यद्गणिकाङ्गनाः ।
स्वमतनुज्वलनाकुलमीक्षयन्निजनिकावसथप्रघणेऽवसत ॥ १२ ॥

परिगताः प्रतिभूमि जना घना विभुगृहेष्वभिमता व्यतपन्त याम् ।
किमवकाशकृते प्रचलिष्यतो नृपबलस्य पुरे निचिताः क्वचित् ॥ १३ ॥

घनिकगेहगवाक्षतटागतानगरुधूपभरानपदिश्य या ।
क्षणदयेव कयापि समाश्रिता जनपतेर्घटनाय जयश्रिया ॥ १४ ॥

तदनु सौधतटेषु शिरोगृहेष्वभिनिकेतकुटुम्बमपि स्थिताः ।
क्षितिपदर्शनकौतुकशंसिनः कृतपरिप्लवनैर्नयनैर्जनाः ॥ १५ ॥

उपचितं गनकैरुदघोषणं श्रवणरन्ध्रमरुन्द्ध समन्ततः ।
अरिभयानकमानकसंभवं भवनहर्म्यजुषा हरिणीदृशाम् ॥ ॥ १६ ॥

पटहनिस्वनतो बधिरीकृतश्रवणरन्ध्रतया शफरीदृशः ।
अथ परस्परमङ्गुलिसंज्ञया विविधया स्वगतं व्यवजह्रिरे ॥ १७ ॥

अभवदीश्वककदास्तिकसंसजद्विजयदुन्दुभिघोषविभीषणैः ।
कतिपयैरवनीकमितुश्चमूमुखचरैर्नगरी मुखरीकृता ॥ १८ ॥

जयमहास्तिकहास्तिकसत्समित्प्रकटनोद्भटहृद्भटताडिताः ।
अजनयन्प्रमुदुन्दुभयो रणं प्रतिमहीन्दुभयोदयकारणम् ॥ १९ ॥

घनतरौपधशृङ्गकनत्कटीघटितकच्छपुटच्छुरितासिभिः ।
अनवर्तियुतैर्नलिकायुधैः कतिपयैर्वसुधाथ करम्बिता ॥ २० ॥

पटहशाङ्कृतिभिर्बधिरीकृतश्रवणरन्ध्रजुषः सुदृशोऽभवन् ।
प्रतिभयाकृतिभिर्नलिकायुधैः प्रतिमुहुश्च निमीलितलोचनाः ॥ २१ ॥

दृढतरांसधृतेषुधिपार्श्वभूकलितबर्हिकलापकलापिनः ।
अटनिदेशगतामलचामरस्तबकसज्जशरासनयष्टयः ॥ २२ ॥

अनुचराहितवीजनचामरद्वितयमध्यधृतोत्प्लवनैः परैः ।
युगपदीक्षितयोधनपाटवाः पुनरमेदुरयन्पुरवीथिकाम् ॥ २३ ॥

चटुलतावहचर्मतिरोहिताः करविधूनितखड्गलतायुताः ।
उरुभुजस्फुरदोपधिमल्लिका वलययन्त्यवशेन समुद्धताः ॥ २४ ॥

स्वतनुलाघवदर्शनपूर्वकं बहुविधं रचितोत्प्लवनादिना ।
मुहुरुदायुधमत्र मुधा युधं निजजनैः सह निर्ममिरे परे ॥ २५ ॥

घनपरस्परघट्टननिध्वनद्गलदयोवलयोत्करपाणिभिः ।
कटिधृतायतकच्छकृशोदरैः क्वचिदियं समवापि च कौन्तिकैः ॥ २६ ॥

नयनकान्तिमवेत्य नवोत्पलप्रचुरतोरणपाशमधो धृते ।
प्रहरणप्रकरे पथि कौन्तिकैर्झटिति सौधजुषो जहसुः स्त्रियः ॥ २७ ॥

बहुविधेषु पटुत्वमथायुधेष्वनुकलं प्रतिपूरुषमद्भुतम् ।
प्रकटयत्प्रबलं बलमुर्वरावलरिपोरचलद्विगिरिखा प्रति ॥ २८ ॥

बहुरजांसि महोवलशासिनः सकलदिग्वलयं समकोचयन् ।
अनुगतान्किमरातिधरापतीन्सपदि शासितुमत्र समन्ततः ॥ २९ ॥

खचलनैर्बलिसद्मभुवा दिवं निबिडयद्रजसां निचयेन च ।
क्षितिपतेः किमु राज्यविवृद्धये त्रिजगदप्यवनीमतनोद्बलम् ॥ ३० ॥

सुरधुनी ध्वजिनीरजसाञ्जसा चुलुकिता समपूरि च भूरिभिः ।
विरुदढुन्दुभिभीषणघोषणस्फुटदजाण्डबहिःस्रुतवारिभिः ॥ ३१ ॥

प्रथमसृष्टिकथापरिमार्जकैरपि बलस्य रजोभिरजोऽमितः ।
प्रसृमरैः परिचिन्त्य जगद्विधिं प्रममदे परमाणुसमागमात् ॥ ३२ ॥

नभसि हन्त नदीपतिमेखलारमणसैन्यरजोभरपूरिते ।
असुमयादपरस्य तनूगतान्न कुहचिद्वतिरास नभस्वतः ॥ ३३ ॥

अथ कुसुम्भपटाहितवेष्टनश्रितविचित्रपतत्रशिरस्तटाः ।
घुसृणकर्दमगुम्भितकञ्चुका विरहिता दयया विनयेन च ॥ ३४ ॥

अतिरुषा परुषाक्षरभाषिणः समचलन्दृढशार्ङ्गशया रयात् ।
अधिगता जवनान्यवना हयानभिपुरोविशिखे पथि केचन ॥ ३५ ॥

अतुलमाश्वमतिश्वसनं रयात्सपदि सादिकशाहतिचालितम् ।
अनवकाशमनन्तमनन्तरं विपुलमश्वगयद्विशिखास्थलम् ॥ ३६ ॥

खरजसा स्थलतामयमश्नुते किमिति शोधयितुं कृतचङ्क्रमाः ।
क्षितितलं नु विहाय विहायसे समवलन्त महीन्द्रचमूहयाः ॥ ३७ ॥

खनरपालकगत्रुपदं नदीपतिरचूष्यत नः पदरेणुभिः ।
किमिति वीक्षितमेव कृतोत्प्लवा वियति दिद्युतिरे विभुघोटकाः ॥ ३८ ॥

हयखुराहतिभिः कृशया भुवा सपदि मांसलया समभूयत ।
प्रबलसादिपरस्परघट्टनत्रुटितलोहतनुत्ररजोभरैः ॥ ३९ ॥

खरतरस्वखुरक्रमणक्रमस्थलशिलाजनितज्वलनं रुषा ।
स्यदधुतानिलसह्यभुवा हयाः प्रतिमुहुश्च पदैः किमकुट्टयन् ॥ ४० ॥

सह सरत्यनिलश्चलचामरश्रित इति क्षितिगीतरुचो हयाः ।
निभृतचामरमस्य निवृत्तये निरगमन्किमु मानसरंहसः ॥ ४१ ॥

अधिगताः परिकंधरमञ्चितां विपुलमञ्चतटीं विधुताङ्कुशाः ।
मणिगिरस्त्रपुटस्ततमौक्तिका गजतयाप्यगमन्कतिचिद्भटाः ॥ ४२ ॥

हरिदिभैर्विधृता स्वकुलाधिपैरतिलघुत्वमसाययति क्षितिः ।
इति मदाम्बुभरैरिभमण्डलो शमयति स्म चमूजनितं रजः ॥ ४३ ॥

शमयतीभघटा स्वमदैरिति क्षितिरजः किमदोऽजनि कार्मणम् ।
कटकटाहमरुन्द्र तदन्तरभ्रमिपरभ्रमराश्मपुरःसरम् ॥ ४४ ॥

स्वविभुदानजलांसलमम्बुधिं स्थलयतीति रुषाशमयद्रजः ।
भुवि दिवि त्रिदिवेऽपि भृतं मदैः श्रुतिपुटैरपि सा करशीकरैः ॥ ४५

अतिनिजानिचमूहयरेणुभिः सलिलमामरसैन्धवमाविलम् ।
करिघटाकदलीघटितैः पटैः परमयत्नमभूत्परिशोधितम् ॥ ४६ ॥

हयखुराहतजातरजोभरैरपिहिते भवदम्बुजिनीहिते ।
करिघटाकरशीकरवारणात्सफलमातपवारणधारणम् ॥ ४७ ॥

वसुमतीतलवासवबाहिनीवथ गतास्वमिनास्ववनीश्वराः ।
निरगमन्सममेव निजैर्निजैः परिवृताः कतिचित्प्रबलैर्बलैः ॥ ४८ ॥

नगरवीथिजुषां नलिनेक्षणाः सदनसौधमदः क्षितिरक्षिणाम् ।
विभवनामविभूपणवाहनान्यथ मिथः स्वसखीभिरकीर्तयन् ॥ ४९ ॥

यवनभूमिपतिः स यदाकृतिः शमनमातनुते शमितस्मयम् ।
विकृतवीक्षणनि कृपभाषणक्षपितसौम्यनयक्षतसंधिभिः ॥ ५० ॥

अयमुपैति हयैरतिपीरुपैरिह वृतो मनसामिव मूर्तिभिः ।
तमवलोकय सादिशिरोमणिं त्वमिति काचिदुवाच सखीं प्रति ॥ ५१ ॥

सखि विलोकय सैन्धववाहनः प्रभुरयं परराजभयंकरः ।
भजति यस्य पुरं परितो नदीपतिरहो परिखावलयश्रियम् ॥ ५२ ॥
अयति तस्य विलम्बितमंसयोर्द्विमिडभूमिभृतः श्रवसोर्युगम् ।
विहृतिडोलिकयोर्विजयश्रियः सरणिमित्यपरा समभाषत ॥ ५३ ॥
गजपतिर्वसुधाकमिता पुरस्तरुणि पश्य स याति दयानिधिः ।
अधिगतो गजमभ्रमुवल्लभं विभुरिव त्रिदिवस्य विराजते ॥ ५४ ॥
निश्चिरसौ महसां निजसामजव्रजपरीतवपुर्व्रजति श्रियम् ।
परिवृतस्य दिनाधिपतेर्घनैरिति वचः समुदीरितमेकया ॥ ५५ ॥
नरपतिः स विभुर्नयनातिथिर्भवति भामिनि पश्य परंतपः ।
विमलहारधरो विजयश्रिया वृत इवात्र मधूकसुमस्रजा ॥ ५६ ॥
संवीतो मणिचतुरन्तयानवर्ती सैन्येन श्रयति स जह्नुकन्यकायाम् ।
राजीवान्तरगतराजहंसलक्ष्मीमित्येका वचनमुदीरयांचकार ॥ ५७ ॥
मनुजाधिपतिर्द्रविडपतिरयं मगधः पुष्परथोपरि स्थितोऽपि ।
स तु तिष्ठति रूपयोपरिष्टात्सकलानां सुतनो मनोरथानाम् ॥ ५८ ॥
मकुटं नवमणिखचितं स दधत्तरुणारुणांशुसमतेजाः ।
गिरिरिव गीर्वाणानां प्रासादो भाति रत्नमयशृङ्गः ॥ ५९ ॥
आश्चर्यं वक्तुमुन्मत्तहस्तिनः स्कन्धमास्थितः ।
अधःकृतावुद्धतानामित्याह गिरमेकिका ॥ ६० ॥
कोङ्कणभूरमणो मणिकङ्कणधारी स याति निःशङ्कः ।
सुषमा यस्य वितनुते विषमायुधमात्तगन्धमिन्दुमुखि ॥ ६१ ॥
अङ्गदं तस्य बाहायां संगतं मणिनिर्मितम् ।
विभाति भूचक्रमिवेत्यभाषत परा गिरम् ॥ ६२ ॥
गुर्जरपतिरयमयते निर्जरविभुविक्रमो महाभागः ।
अवलोकय विफलीकृतशिवलोचनवह्निरन्य इव मदनः ॥ ६३ ॥
खड्गं वहन्विशदरेखमसौ कराग्रे विश्वासपत्रमिव विद्विषतां विभाति ।
दत्तस्य वस्वविषयस्य ददामि नाकमित्यक्षराङ्कमिति काचिदुवाच वाचम् ॥

प्रासादाग्रसदः परस्परमिति प्रौढं वदन्त्यस्तदा
कामिन्यः स्वकटाक्षनीलकमलस्रग्भिः समभ्यार्चयन् ।
आरुह्य द्विरदेन्द्रमञ्जनगिरिप्रांशुं प्रतोल्यां शनै-
रायान्तं रघुनाथसिन्धुरशनाकान्तं लसन्तं श्रिया ॥ ६५ ॥

बहुलतरवारिधारामग्नान्सद्यः सपत्नमहिपालान् ।
तरणिं नीत्वा स्वस्थास्तनुपे दययेति विनुत वीरजनैः ॥ ६६ ॥

जलनिधिगर्भवासवशनिर्भरदर्परिपुप्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभितकल्पनकल्पतरो जय करुणासनाथ रघुनाथ जनाधिपते॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारोभवत्साहितो-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
काव्ये पञ्चदशं च सर्गमतनोत्सोऽयं मखिग्रामणी-
रत्नाकद्भुदविद्वदद्भुतकरे साहित्यरत्नाकरे ॥ ६८ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्यासवाजपेययाजि-
गोविन्ददीक्षितनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
पञ्चदशः सर्गः ।

# षोडशः सर्गः ।

आरुह्य शृङ्गारितमौपवाह्यमायान्तमम्भोजदृशः प्रतोल्याम् ।
ततोऽशरूपं रघुनाथभूपमक्ष्णोरुपग्राह्यमथो वितेनुः ॥ १ ॥
नारी पुरासीद्रघुनाथनेतुः संस्पर्शतस्तस्य शिला शरण्याम् ।
आकारमस्य त्ववलोकयन्त्यो मोहादभूवन्नचला मृगाक्ष्यः ॥ २ ॥
अङ्गेषु रम्येषु विभोरकुर्वन्गतागतानि प्रमदाकटाक्षाः ।
शाखासु पूर्णस्तबकासु लेखसालस्य लोभादिव चञ्चरीकाः ॥ ३ ॥
तलोदरीभिर्मुहुराननं वा द्वयं दृशोर्वा भुजयोर्द्वयी वा ।
अदृश्यतासेचनकाखिलाङ्गकान्तेर्महोशीतकरस्य नान्यत् ॥ ४ ॥
एकैकमेवापघनं मृगाक्ष्यो विलोकयन्ति स्म विभोर्न चान्यम् ।
आलोकितो यद्यपरोऽपि ताभिः स विस्मृतस्तेन समीक्षितः प्राक् ॥ ५ ॥
आयाममक्ष्णोर्भुजयोश्च हर्षादस्यावनीन्दोरनुधावमानाः ।
दृशः समस्ताः सुदृशां चिरेण समश्रयन्त श्रवसी च जानू ॥ ६ ॥
कस्तूरिकाचित्रकमस्य फाले कर्णे तदासीदसितोत्तंसः ।
उरःस्थले चोत्पलकॢप्तमाला कटाक्षशोभा कलभाषिणीनाम् ॥ ७ ॥
मङ्क्त्वा किरीटाग्रमणिप्रभाया कस्तूरिकां प्राप्य च कण्ठलिप्ताम् ।
श्मश्रूणि चोपास्य समं नृपेन्दोः स्त्रीणामपाङ्गद्युतिरंसलाभूत् ॥ ८ ॥
अर्घ्यं प्रमोदाश्रुभवैः कटाक्षमहःसुधाभिर्मधुपर्ककृत्यम् ।
अक्षीणि तासां विदधन्ति हर्षादक्षीणमातिथ्यममुष्य चक्रुः ॥ ९ ॥
दृशो विशालाः सुदृशां कटाक्षनीलाश्मलीलानलिकानिकायैः ।
निःसीमलावण्यरसान्निपीय न जातु तृप्ता रघुनाथनेतुः ॥ १० ॥
लक्ष्यं समग्रं ललना वितेनुस्तदीयरूपं सुदृशां सहैव ।
एतन्न चित्रं वसुवर्षकारि यत्स्थूललक्षं प्रथते सुदृक्षु ॥ ११ ॥
अस्याभिरूप्यं हरिणेक्षणानामाकृष्टदाक्षिण्यवनोपरिण्यः ।
अयःशलाकावलिमग्रदेशस्थितामयस्कान्तशिला यथैव ॥ १२ ॥

लावण्यसिन्धो रघुनाथनेतुर्मग्नस्य गाढं मनसस्तदानीम् ।
न तारकोऽभून्नतमध्यमानां प्रतारकः किं नु बभूव कन्तुः ॥ १३ ॥
विभुत्वमेके मनसो व्यजानन्नणुत्वमन्ये तु तयोरणुत्वम् ।
न्याय्यं तदेकत्र यतो न्यमाङ्क्षीत्प्रमाझरे पत्युरमुष्य धात्र्याः ॥ १४ ॥
स्वान्तान्यणूनि स्वत एव किं च मग्नानि लावण्यझरे महोन्दोः ।
ग्रहीतुमोशो न पितामहोऽपि कान्ताजनास्तत्र कथं प्रगल्भाः ॥ १५ ॥
चेतांसि दृग्भ्यो नरपालमेत्य स्थितानि तत्रैव वधूजनानाम् ।
अशक्नुवन्तीव पुनः प्रवेष्टुमानन्दबाष्पापिहितासु तासु ॥ १६ ॥
स्थितानि चेतांसि चिराय भूपं निर्गत्य नेत्रान्तरतो निमेषः ।
सहामुना ताभिरथाहृतानि यदन्तरासामयमैधते स्म ॥ १७ ॥
अनेकधाद्दश्यत हन्त मोहान्नारीभिरेको रघुनाथनेता ।
पौलस्त्यसेनासु पुरा प्रयुक्तामधत्त मायामधुना किमेषः ॥ १८ ॥
नेत्राध्वना मे नृपतिः प्रविष्टो हृदन्तरं याति पुरेत्यवेत्य ।
निमीलिताक्षी सरणिर्निरुद्धा तस्येति काचित्तरुणी जहर्ष ॥ १९ ॥
स्रस्ते नृपालोकनसंभ्रमेण स्तनोत्तरीये स्तनयोरवेक्ष्य ।
तस्यानुबिम्बं विदतो तमेव सखीं परा सादरमालिलिङ्ग ॥ २० ॥
परस्परामेक्ष्य पयोधरान्तर्बिम्बं महीजम्भभिदः प्रमोदात् ।
तमेव मत्वा तरसा भुजाभ्यामुभे तरुण्यावुपगूहतः स्म ॥ २१ ॥
परा नृपालोकनपारवश्यश्लथात्पतद्भिश्चिकुरात्प्रसूनैः ।
समावृताङ्गी सकलैरलोकि विद्धेव बाणैर्विषमायुधीयैः ॥ २२ ॥
स्रस्तोत्तरीयेण सखीसमक्षमाच्छाद्य संक्रान्तममुं कुचान्तः ।
आलोकयन्ती तदलाभतः काप्यन्तः प्रविष्टोऽयमिति प्रहृष्टा ॥ २३ ॥
संक्रान्तमप्यात्मशयात्मदर्शे सरागमेका न समीक्षते स्म ।
धरावलारिं परितस्तदीयानालोक्य तत्रानुचरान्विभीता ॥ २४ ॥
रागेण दृग्भ्या रघुनाथभूपं रामा पिबन्ती रतिनाथरूपम् ।
इन्दुं करेणेव जिघृक्षुरेनमिच्छुर्विमोहादिति काचिदूचे ॥ २५ ॥

जयन्तदस्रप्रसवास्त्रसृष्ट्या जातं पुरा यज्जलजासनस्य ।
असाधु तत्कौशलमद्य मन्ये लावण्यसृष्ट्या रघुनाथनेतुः ॥ २६ ॥
श्लिष्यन्ति या भूमिसितांशुमेनं ता एव धन्यास्तरलेक्षणासु ।
अन्यास्त्ववन्यामतिरूपधेयभाजोऽपि चित्रप्रतिमाविशेषाः ॥ २७ ॥
बाहे युवां प्राप्य ममाङ्कभूयं विभोरभूतं बत विप्रकृष्टे ।
सखो तु वां चम्पकमालिकेयं कण्ठं समाश्लिष्यति गाढमस्य ॥ २८ ॥
असावलभ्यो मम हन्त चित्तमेनं श्रितं वा पुनरेति चेन्माम् ।
तदास्मि धन्या न तदप्युपागादलदेषु सौहार्दमतो न कार्यम् ॥ २९ ॥
कटाक्ष तुभ्यं कलये नमस्यामस्याधुनाश्लेपकृतार्थिताय ।
अङ्गेषु सर्वेषु तदङ्गपालीदूरेषु वैयर्थ्यधुरंधरेषु ॥ ३० ॥
आकाररेखामतनोवलारेरालोक्य मोहादिति भाषमाणाम् ।
निश्चित्य तस्मिन्निहिताभिलाषां प्रौढा सखोमित्यपरा बभाषे ॥ ३१ ॥
वशीकरोत्येव वधूः कदापि स्वयं न वश्यः स्वदमानचापः ।
तत्कोटिसाम्यं दधदेष मूर्त्या वश्यः कथं ते वसुधासुधांशुः ॥ ३२ ॥
प्रेष्या कटाक्षस्य पयोधिकन्या वाचां सवित्री वचसोऽपि यस्य ।
प्रसह्य भर्तारमिमे भजेते सोऽयं कथं ते सुलभो नरेन्द्रः ॥ ३३ ॥
आत्मानमाकर्षति रूपमस्येत्यस्मिन्न विश्वासमये विधेहि ।
महोमहेन्द्रस्य मनस्तदेतत्सरोजनेत्रे सहते न यस्मात् ॥ ३४ ॥
लोकत्रयीलोलविलोचनानां प्रतारकः पञ्चशरः स्वमूर्त्या ।
प्रतारकस्तस्य च पार्थिवोऽसौ कथं विधेयस्तव कातराक्षि ॥ ३५ ॥
अथाच्युतश्लोणिवलाभियातेर्जयन्तमेनं जगतीपरिव्ययम् ।
विलोकयन्ती विविधैर्वचोभिरवर्णयत्काचिदमुष्य रूपम् ॥ ३६ ॥
आलोक्य सौन्दर्यममुष्य रत्याः पतिव्रतात्वे सति भज्यमाने ।
करोति रोषं न ततः परं तु कन्तुः स पत्नीति धिया तमस्यै ॥ ३७ ॥
विजित्य कामं विभया तदीयं धुनोति चायं सुहृदं मुखेन ।
श्वासेन वाहं ध्वजमीक्षणेन कैरयेन गव्यं कवनेन चापम् ॥ ३८ ॥

सुरूपशाली न विधुः सुपेषुर्नाह्लादको नैव वृतौ श्रिया तौ ।
भ्रातृत्वपुत्रत्वभृतेस्तदस्य सर्वैर्गुणैः किं समता तयोः स्यात् ॥ ३९ ॥
हित्वोत्तमं च स्वमियाय कार्ष्ण्यं परः पुमान्पाटलतां विधाता ।
ईशो वलक्षत्वमपोति खिन्ना ह्रष्यत्यमुं प्राप्य हिरण्यकान्तिः ॥ ४० ॥
अमुष्य देहांशुसवर्णतायै स्वर्णं स्वजन्मावधि साधु तप्तम् ।
पञ्चाग्निमध्यं प्रविशत्फलं तत्प्राप्नोति न प्रत्युत कार्श्यमेव ॥ ४१ ॥
मत्कर्णिकामस्य तनूमहोभिः समा विधेहीति विधेः सरोजम् ।
तत्साधनं च स्वयमेव बिभ्रत्परागमर्घासनतां प्रयाति ॥ ४२ ॥
प्रभोर्विधायाकृतिमीं परः किमेवं सृजेदेतदिति स्मयेन ।
परीक्षितुं तत्करणैः परागैः सहासृजच्चम्पकमब्जपीठः ॥ ४३ ॥
अमुष्य देहांशुलवैकसाम्याद्धृता वधूभिः स्तनयोर्हरिद्रा ।
सर्वात्मना तत्समता यदि स्यादस्यास्तदा कोऽतिशयो न जाने ॥ ४४
गोरोचना क्षोणिपतेरमुष्य शरीरशोभाभरसाम्यसिद्ध्यै ।
चूर्णीभवन्ती यतते सुखेन सद्भिः कथं वा समता घटेत ॥ ४५ ॥
प्रभुर्मम स्वप्रभया विजेता तथाप्यसौ मां शिरसा दधाति ।
इति त्रसन्संभृतहीरदम्भात्स्विन्नः किमु स्वर्णमयः किरीटः ॥ ४६ ॥
प्रायेण दास्यत्ययमर्थिने मां भवाम्यदेयोऽहमिति क्षितीन्दोः ।
किरीटतामेत्य गिरिः सुराणां मुक्ताभिराभाति हसन्निदेव ॥ ४७ ॥
विधुर्वसन्तो मदनो विधाता विधाय सर्वेऽपि विभोर्ललाटम् ।
ज्ञातुं किल स्वस्वविधानमेभिर्लेखात्रयीयं लिखितात्र भाति ॥ ४८ ॥
कस्तूरिकाकल्पितमस्य किंचिद्विशालमग्रे तिलकं विभाति ।
भास्वन्मुखेन्दुप्रभयेव सामि हसन्मुखं मेचकमम्बुजातम् ॥ ४९ ॥
एतस्य दीर्घाकृतिरेणनाभिविशेषकः पञ्चशरो विभाति ।
भ्रूवल्लिदम्भेन भुजौ प्रसार्य दैर्घ्यं दृशोः किं धरणीपरिण्यः ॥ ५० ॥
श्रुतं समस्तं वसुधासुधाशोर्यज्जायते दृष्टमिव प्रकामम् ।
दृशोरमुष्य श्रवसोश्च नित्यसंबन्धजन्मा महिमा स एषः ॥ ५१ ॥

नेत्रे महीनेतुरमुष्य दूरस्थितं च कर्णद्वयमाक्रमिष्टाम् ।
आक्रामतो मामपि मध्यभाजमित्युन्नतत्वं भजतीव नासा ॥ ५२ ॥

स्पर्धावशेनास्य परस्परस्य दृशौ भजन्त्याविति दीर्घभावम् ।
उदीक्षितुं प्रापि किमुन्नतत्वं मध्यस्थया नासिकया महीन्दोः ॥ ५३

मुखेन्दुलावण्यमुधासुधाब्धौ क्रीडत्सु चित्तेषु कृशोदरीणाम् ।
श्मश्रुच्छलेनापसृता महीन्दोः पार्श्वद्वये शैवलपङ्क्तिरेव ॥ ५४ ॥

गलद्वये कर्णिकयोरमुष्य भान्त्यष्ट मुक्ताः प्रतिबिम्बभाजः ।
उच्चार्यमाणानि रघूद्वहस्य मन्त्राक्षराणीव बहिः स्फुरन्ति ॥ ५५ ॥

अमुं श्रयिष्यन्त्यपराणि भूपावृत्तीनि रत्नानि विना प्रवालम् ।
इत्यस्य साफल्यमिव प्रदातुं व्यधान्महीन्दोरधरं विधाता ॥ ५६ ॥

कान्तानुरक्ताधरसंनिधानात्स्वच्छापि तद्वद्भवतु द्विजालिः ।
अवाप्य नेत्रे श्रुतिमप्यमुष्य कान्तानुरागं कथमादधाते ॥ ५७ ॥

सुधार्द्रसूक्तेर्वसुधासुधांशोः फणीश्वरोऽमुष्य भजेत साम्यम् ।
स्वभावतो येन वचस्तदीयं विषानलज्वालविशेषरूक्षम् ॥ ५८ ।

आशीविषेन्दोरमृतोक्तिता चेदध्यापकस्याप्यमृताशनानाम् ।
सहस्रधा चेत्प्रतिपादकत्वं स्थाने तयोरस्य तदा समत्वम् ॥ ५९ ॥

आवर्तनादार्जितमागमानां जाड्यं चतुर्णां जलजासनेन ।
संत्यज्यते सांप्रतमेष भूत्वा चतुर्विधेऽपि प्रभवन्कवित्वे ॥ ६० ॥

प्रबन्धमात्मन्यकरोत्प्रसिद्धं वाल्मीकिरादाविति वाग्विलासैः ।
स एव रामस्तनुते स्म तस्मिन्भूत्वा निबन्धं रघुनाथभूपः ॥ ६१ ॥

सयत्नमाहृत्य सुहृत्प्रमोदं स पारिजातं हरिरब्दमेकम् ।
अधादयं त्वस्य कथां निबध्नन्नयत्नमाकल्पमहो तनोति ॥ ६२ ॥

रामायणोक्तौ रघुनाथनेता प्राचेतसादप्यजनि प्रतीतः ।
तत्रान्यवृत्तं वदतः स्वकीयवृत्तस्य वक्तुश्च न किं विशेषः ॥ ६३ ॥

पराजितानि क्षितिपाकभेत्तुः कण्ठेन किं कम्बुकदम्बकानि ।
न्ययुञ्जतामुष्य निषेवणाय निजात्मजा निस्तलहारमुक्ताः ॥ ६४ ॥

वीरेन्दिरानित्यविहारबाहाप्रासादयोर्भूषणजालभाजोः ।
अत्युन्नतौ हाटककूटलक्ष्मीमंसौ धराधीशितुरादधाते ॥ ६५ ॥

रत्नाङ्गदाभालहरीपरीते प्रभोर्भुजे पार्श्वधृतप्रकीर्णे ।
संभावयन्त्यौ स्वभवप्रतापात्कीर्त्तिप्ररोहौ किममुष्य भातः ॥ ६६ ॥

रत्नाङ्गदस्फुरितगजकुलानुबिम्बा बाहुद्रुयी बलिभिदो विलसत्यमुष्य ।
संचिन्त्य बाहुजनुषां समरेऽवसानं भूयोऽपि ताञ्जनयितुं भुवि गर्भिणीव ॥

अत्यायनत्वमतिमांसलतामुष्य बाहुद्वयी महिवलासुहृदो भजन्ती ।
पूर्वावतारविधृतं भुजयुग्ममन्यत्स्वामिन्प्रविष्टमिति संप्रति शंसतीव ॥६८॥

चाञ्चल्यमब्धितनया स्वममुष्य दस्य
स्थित्वाब्धिवक्ष इति सिन्धुभवाः किमन्ये ।
आत्मस्वपि स्थिरतरातिशयाय वक्षो-
हाराः श्रयन्ति विविधा मणयोऽप्यमुष्य ॥ ६९ ॥

वक्षो भात्यसुहृन्मनोरथगतिद्वारोपरोधि प्रभोः
सौवर्णं विपुलं कवाटमुपरिस्थानेन्दिराचित्रितम् ।
पार्श्वद्वन्द्वसुयोजितस्थिरमहाबाहार्गलाभासुरं
चारश्मश्रुपरंपरासितपयोजातोन्मिषत्तोरणम् ॥ ७० ॥

निरङ्कुशो नृपतिलकः क्षमाभृतो निरीक्षितो नमयति योऽखिलानपि ।
स सिन्धुरं चलयितुमेव पाणिना वहत्यसौ बत सितमङ्कुशं कथम् ॥

पार्श्वे प्रमृष्टे इव पार्थिवेन्दोर्मेयं वलग्नं करमुष्टिनेव ।
कान्तौ त्वचा हस्तिकराविवोरू मुग्धौ च जानू मुकुराविवास्य ॥ ७२ ॥

स्कन्धे गजस्य चलता श्रुतिचामरेण
पादाङ्गदं वितपते नृपतेः स्थिरस्य ।
आलक्षितं क्षणमलक्षितमात्तरत्नं
बिम्बं वनेन शरदीव विभो रुचीनाम् ॥ ७३ ॥

अम्लानाभिरपास्तरञ्जुनहनक्लेशाभिरम्भोरुह-
स्रग्भिः सोभजुषामपाङ्गजनिभिः सश्लाघमेणीदृशाम् ।
आयुष्मान्रघुनाथभूमिपरिणीरभ्यर्चितो भूयसा
संजातप्रमदो बलेन निरगात्तत्रापूरीतो बहिः ॥ ७४ ॥

भू.......... .........रभावा-
त्कोपप्रसादौ धरणीश्वरेषु ।
उन्मूलनेनाधिकरक्षणेना-
प्युदीरय........पण्डितौघैः ॥ ७५ ॥

जलनिधिगर्भवासरजनिर्भरदर्परिपु-
प्रतिहतिहेतुसेतुकृतिनूतनदाशरथे ।
कविबुधगायकाभिमतकल्पनकल्पतरो
जय करुणासनाथ रघुनाथ जनाधिपते ॥ ७६ ॥

प्रौढश्रीरघुनाथभूपतिकृपास्फारीभवत्साहितो-
साम्राज्यो निगमागमार्थनिपुणः श्रीयज्ञनारायणः ।
सर्गं षोडशमप्यपूरयदयं स ग्रामणीर्यज्वना-
मत्राकद्रदविद्रदद्भुतकरे साहित्यरत्नाकरे ॥ ७७ ॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणश्रीमदद्वैतविद्याचार्यसाग्नि-
चित्यसर्वतोमुखातिरात्रसाग्निचित्याप्तर्याजवाजपेययाजि-
गोविन्ददीक्षितवरनन्दनस्य साग्निचित्यसर्वक्रतु-
याजिनः श्रीयज्ञनारायणयज्वनः कृतौ
साहित्यरत्नाकरे महाकाव्ये
षोडशः सर्गः ।

PRINTED AT THE DIOCESAN PRESS, MADRAS—1932. C4830